IES No. 6.

# अच्युतशतकम्.

श्रीकवितार्किकसिंह सर्वतन्त्रस्वतन्त्र

श्रीमद्वेदान्ताचार्यसूरि-

विरचितम्

श्री. ति. अ. ति. कुमारताताचार्यकविभूषण

प्रणीतया ज्योत्स्नाख्यया व्याख्ययानुगतम्.

---

श्री. अ. वी. नरसिंहाचार्य, ति चे. नरसिंहाचार्याभ्यां

श्रीकाञ्चीपुरं कोटिकन्यादानं

श्रीशैलताताचार्याध्वरिणा च परिशोधितम.

चेन्नपुर्यां

आर्. वेङ्कटेश्वरसभाध्यक्षैः स्वकीयानन्दमुद्राशालायां

मुद्रितं विजयताम्.

1910



[ANANDA PRESS, MADRAS.] *[PRICE A*

# उपोद्घातः.

---

अयि महाशयाः सहृदयशिरोमणयः किंचिदिव भवन्तः सावधाना निशमयत मामिकामिमां सप्रश्रयां विज्ञापनाम् ॥—

इह खलु जगति क्रमेण विरलासु विमलासु कलासु, समधिगतावद्यासु निरवद्यासु विद्यासु, समत्सरेषु विद्वद्वरेषु, निरादरेषु तदितरेषु, तथा नाम काचन परिणतिरुदभूदद्य भारत्याः, यथा वृथा भवति कस्यचित्कादाचित्कोदयापि योग्या वाङ्मयेषु भाग्यभाजोऽपि जनस्य । तत्रापि महताऽऽयासेन संपादनीयवैदुष्यतया देशविशेषाभिमानहीनतया च मृतभाषाव्यवहारविषयतामापादितायाः निखिलपुरुषार्थसार्थसमर्थकश्रुतिस्मृतीतिहासपुराणागमच्छन्दोज्यौतिषसांख्यपातञ्जलजैमिनीयादिशालिन्याः केवलाक्षरमातृकागुणानिकायामपि दिशन्त्या निरतिशयं फलविशेषं गीर्वाणभाषायाः घरगीगीर्वाणव्यपदेशशालिष्वपि न दृश्यते तावान् परिचयः।किंचायं क्वचिद्दृश्यमानोऽपि भाषान्तराङ्गत्वेन सार्वभौममहिष्याश्चेटीपदारोपणसदेश्य एव संभाव्यते विविधदुरवस्थाभाजनं परिभवव्यपदेश्यश्च । सत्येवं भारतीमुग्धभाषितरूपाणां सहृदयहृदयरञ्जनेनैव सोपयोगानां प्राकृतादीनां षण्णां भाषाणां नहि नाम्नापि सांप्रतिकेषु प्रकाश इति नाधिकमिदं भाषणम् । प्रागपि खल्वेता विरलविरला एवेति श्रूयन्ते । तत्रानुमापकत्वं भजति गीर्वाणभाषायां यावन्तो ग्रन्थाः, तावतामिदंभाषामयाणामनुपलम्भ एव । तत्त कारणान्तरानुमाने तु स इतोऽन्यत्रापि न कुतो दृश्यत इति प्रश्नो न कथमपि गतार्थः । तन्न मन्ये संस्कृतभाषापरिज्ञानोत्तरकालभावित्वनियम इदंभाषापरिज्ञानस्य किमपि निदानमिति । येन प्रकृतिभूतसंस्कृतभाषालक्षणातिदेश एतासामवर्जनीयः । सिद्धं हि प्रकृतिधर्माणां विकृतिष्वतिदिश्यमानत्वं दर्शपूर्णमासैन्द्राग्नादिन्यायेन । अतोऽधीत्य कथंचिद्गीर्वाणभारतीं तत्रापि परिशीलनमात्रेणाश्रान्ताः सम्यगामृष्टशब्दशासनाः विद्वायमाना विसृज्य श्रमानुभवसमयसमापतननियतां मनसि तन्द्रालुतां, व्याधूय पण्डितमानितां निखिलदाम्भिकमानितां, भाषान्तरेषु बध्नन्तः प्रेमावेशं, पुनर्यथापुरमक्षरमातुकानुशीलनादौ प्रवर्तन्त इतीदमबहुव्यक्तिनिष्ठम् । एवं स्थिते तत्रभ-

वान् वेदान्ताचार्य इति जगति विदितसमाख्यः सर्वतन्त्रस्वतन्त्रः कवितार्किकसिंहः श्रीमद्वेङ्कटनाथसूरिः गीर्वाणभाषायां द्रविडभाषायां च परश्शतान् प्रणीय भगवत्स्वरूपरूपगुणविभूत्यनुसन्धानपरान् श्रुत्यन्तसारोद्धाररूपान् प्रबन्धान्, भुवनमिदं पावनीकुर्वन् याद्दच्छिकयात्रावशादासादिताहीन्द्रनगरः;तद्रामणीयकेन भगवतो देवनायकस्य निखिलजगदनुग्रहाय परिगृहीतार्चायोग्यदिव्यमङ्गलविग्रहस्य निदेशेन च तदौपवाह्यं छन्दोमयं वैनतेयं तदुपदिष्टमन्त्राराध्यं मधुकैटभकरटिकूटपाकलं वेदोद्धरणचतुरतोपदर्शितहंसभावं हयग्रीवं चोपास्य तत्प्रसादसमासादितसार्वजनीनविमलज्ञानः कदाचिदिमं निरन्तरान्तरङ्गतरङ्गितनिरर्गलविहारभगवच्छरणागतिमन्त्ररूपद्वयानुसन्धानपरिवाहरूपं प्राकृतभाषात्मकतया निखिललोकजनकभूतभगवन्मुग्धपुत्रदशारोपणोपयोगधन्यं पाञ्चालीगात्रशोभाहृतहृदयवधूवर्गपुंभावनीतिसिद्धनिजभगवदनन्यार्हशेषतौपयिकनायिकावस्थाभावनविहितसङ्कल्पसुखातिरेकं वाक्यानुशीलनमात्रेणापि चित्ताकर्षकम्, अर्थानुचिन्तनेन परमभक्तिपर्यन्तदशापत्त्या भवभयातुरजनजीवनं, सन्न्यायानुगृहीतशास्त्रनिष्कर्षसमेधितसौभाग्यतया रचितपरवादिमुद्रणं, पञ्चमाम्नायसारभूतश्रीमन्नामसहस्रोपोद्घातोपदेशविशदीकृतपुण्डरीकाक्षस्तवरूपतया जन्मसाफल्यहेतुं, नामश्रवणसमनन्तरमेव श्रीमन्नारायणस्य शरणागतरक्षादीक्षाधरत्वस्फूर्तिद्वारा संसारपथपरिश्रान्तमादृशजनसमाश्वासनैकतानम्, अच्युतशतकं नाम प्रबन्धमिमं प्राणैषीत् ॥

अतिपतितेऽपि गणरात्रे कृतिरियमधुनापि विरलप्रचारैवेति न खलूपपादनायासमपेक्षते। येन तत्प्रतिपाद्यभूतभगवत्सान्निध्यशालिन्यप्यहीन्द्रनगरे प्रकृतप्रबन्धं प्रणीतवतो गुरुवरस्यान्तेवासिपरंपरापरिप्राप्तेष्वपि द्वित्राः अन्ततस्त्रिचतुरा वा कृतिमिमां साकल्येनाम्रेडयन्ति। तत्रापि तावदेकद्वाश्शुद्धं पाठमस्या नोपलभन्त इति अवसरप्राप्तं वस्तुतत्त्वमिदमुपक्षिप्तम्। न पुनरियमवधीरणावमानना वा। तादृश्यपि दशा विलुप्तप्रचारायाः प्राकृतगिरो महिम्नेत्यहमनुसंदधानः परिचितप्राकृतवाणीकणः व्याख्यान्तरमन्विष्याप्यनासादयन्--किमपि हस्तालम्बाय भवेन्मदपेक्षया किञ्चिज्ज्ञानाम्;महामतयस्तु जानते ये स्वत एव,न तेषामनया कोऽप्यपकारः; उपकारश्चात्मनो गुरोरस्य सूक्तिसुधाझरावगाहेन—इति पश्यन्निमाम् अनतिसंकुचितामनतिविस्तृतां च 'सुहअं अच्चुअसअअं सहिअअहिअएसु सोहउ

समग्रगुणम्' इति सूचितरत्नभावस्येदं प्रबन्धस्य अनुगुणतया विहितज्योत्स्ना-व्यपदेशां कामपि व्याख्यां समाख्यम् ॥

अस्यां च गुणा एव सन्तु, आहोस्विद्दोषाः, उतोभयेऽपि ; न तावता क्वापि मम विकृतिश्चेतसः । नहि न जानते कृतधियः परिश्रमं प्रबन्धॄणाम् । अपि च कष्टेयं व्याख्यातृता सामान्यत एव ; तत्रापि प्रवाचां बहुविदां वचनेषु प्रवेशः पुष्णाति न कस्य परिश्रमम् । न चायं संकुचितः—'नहि सर्वस्सर्वं जानाति' 'गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः' इति च न्यायः । किञ्च त एव सुखसंराध्याः परमोपकारिणश्च, ये सर्वजनसुलभान् अवश्यपरिहार्यान् दोषान् स्वयं कथञ्चिदन्विष्य यथालाभमानन्दं विन्दन्ति, ये च दूषणापदेशेन जनस्य पापराशिं स्वायत्तीकुर्वन्तः कृतार्थतामात्मनो मन्यन्ते ; किंच येषां दूषणप्रवृत्तिरेवानुमापयति कृतीनां च महिमानम् । अपि च दोषान्वेषणश्रद्धया सहस्रमपि विहाय कार्यजातमात्मनस्साधुप्रथां सुचरितसमार्जनदोहदं च, अङ्गीकृत्यापि पातकं प्रवर्तन्ते दृढबद्धमुष्टय इदंविधेषु परकार्येष्वि- [illegible]मितोऽपि परकार्यप्रवणता नाम । सर्वमिदमितरदृष्ट्योपपादितम् ; वस्तुतस्तु —'यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ। समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते' 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ' इत्यादिकां परमपुरुषवदनारविन्दमरन्दधारां पायंपायमाकण्ठं परितृप्तमनसां किं यशसा, किमयशसा, किं मित्रं, को नामामित्रः, किं सुखाय, किमुद्वेगाय . अवश्यकार्यं वाचिकं गुणग्रहणरूपं 'शृणुयाद्वालिखेत्पठेत्' इत्यादिना विहितं भगवदाराधनं तु यथाशक्ति निर्वर्तितम् । तदलमतिमात्रं विस्तरेण । विपुलायामत्र विपुलायां सुलभा एव विविधाधिकारिणः। अतो येषामनयोपकारः, ते परिगृह्णत एवेति कृतं मत्सरिणां दूषणारोपणमनुचिन्त्य ; भवादृशां तु परिग्रहो गुणग्राहाणाममन्दानन्दसन्धायक इति किमितोऽप्यवशिष्यते विशिष्य मम धन्यताया इत्यखिलमनवद्यम् ॥

इति

**श्री· ति· अ· ति· कुमारताताचार्यः,**

(कविभूषणः.)

# अच्युतशतकश्लोकानामकारादिक्रमः.

श्रीः.

# अच्युतशतकं सव्याख्यम्.

महुमहचलणम्भोअं कलसोअहिकण्णआकरम्बुअगाहिअम् ।
विणअणमिए सिरे मह पहुज्झरेहि अहिसेअमवहावेउ ॥

वम्मीइवारणसुसिक्खिअभारईसु
जाअच्छिहेण सिरिवेङ्कडणाअएण ।
उम्मीलिआ किए थुई मह भाअहेअ-
कप्पदुमस्स फलिरत्तणमज्ज देसु ॥

दोसा गुणा वि सुलहा विहिणिम्मिएसु
लोएसु णं तह किइम्मि अ मज्झ एदे ।
दीसन्ति जं पिसुणपण्डिअभाअहेआ
तेहिं गुणा वि ण खु मे ण अ को वि दोसो ॥

उण्हो वि सहासअरो जडो वि चन्दो सुहं देन्ति ।
एव्वं वत्थुसहावो लङ्घिज्जइ केण भुवणम्मि ॥

सक्कअपाअअवारणसुसिक्खिएहिं सुसद्देहिं ।
गहिरो अजपबन्धो वाअक्खीअइ दआअ णाहस्स ॥

अवतारिका ॥ अथ तत्रभवान् वेदान्ताचार्यापराभिधानः सर्वतन्त्रस्वतन्त्रः श्रीमद्वेङ्कटनाथसूरिः ' स्वरूपरूपविभवगुणकर्माणि शार्ङ्गिणः । व्याचक्षीत निबध्नीयाच्छृणुयाद्विलिखेत्पठेत् ' इत्यादिप्रमाणपरिप्राप्तस्तोतव्यभावं संसृतिदवदहनदन्दह्यमानचेतनसंरक्षणाय औषधाचलोपत्यकामधिवसन्तमखिलकल्याणगुणनिधानं स्तव्यं स्तवप्रियं च भगवन्तं देवनाथं ' पिता च रक्षकः शेषी ' इत्यादिना

सन्दर्शिताखिलसाधारणपितृभावतया तत्प्रतिसंबन्धिभूतबालत्वसमाधिना 'वचः प्रियं भगवतः प्राकृतं संस्कृतादपि । प्रौढोक्तेरपि हृद्यं हि शिशूनां कलभाषितम्' इत्यादिना प्रशस्तैः प्राकृतभाषामयैः सूक्तैः दयानुसन्धानसिन्धुपरिवाहरूपैः अवगणितसुधारसमधुरिमभिराराधयिषु प्रथमं निजान्तरङ्गनिस्तरङ्गजलधिप्रतिफलितस्य भगवत्स्वरूपरूपगुणविभवादेरनुसन्धानेन निर्भरे परमानन्दसिन्धौ निमज्जन् एतादृशामन्दानन्दसंविभागेन मादृशानपि संसारिणः समानन्दयितुमनाः तन्मङ्गलाशासने नियुङ्क्ते—

**नमह तिअसाण णाहं सच्चं दासाण अच्चुअं ठिरजोइं ।**
**गलुलणइतडतमालं अहिन्दणअरोसहाअलेक्कगइंदं ॥ १ ॥**

छाया ॥ नमत त्रिदशानां नाथं सत्यं दासानामच्युतं स्थिरज्योतिः ।
गरुडनदीतटतमालमहीन्द्रनगरौपधाचलैकगजेन्द्रम् ॥

व्या॥ **नमह** इति ॥ त्रिदशानां देवानां, नाथं, महिमोदग्राणां देवानामपि देवत्वे किं पुनस्तद्व्याप्यानामिति लभ्यते । त्रिदशाना नित्यसूरीणामिति वा । 'देवनाथः' इति समाख्याप्रकाशकं चेदम्, दासानां दासविषये सत्यम् अविक्रियं दृढप्रतिज्ञमित्यर्थः । 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन' 'न हि प्रतिज्ञा संश्रुत्य ब्राह्मणेभ्यो विशेषतः' 'न मे मोघं वचो भवेत्' इत्यादिकमत्र भाव्यम् । अत एव नास्ति च्युतं च्युतिः यस्मात् तं, 'न मे भक्तः प्रणश्यति' इति स्मृतेः, नास्ति च्युतं यस्य तमिति वा अच्युतम् । एवमनयोर्दाससत्याच्युतपदयोः व्याख्यानव्याख्येयभावोऽवधार्यः । आचार्यश्चायम् अस्मिन् भगवद्गुणे सादर इदमेव प्रायस्समाम्रेडयति । परकालसूरीन्द्रश्च महाश्रीसूक्तप्रबन्धे तृतीयशतकाद्यदशकतृतीयगाथायामेवमनुसंहितवानिति तच्चास्याचार्यस्य बहुमतौ निदानं भवितुमर्हति; तच्च 'अडियवर्कु मेय्यनाकिय तेय्वनायकन्' इति । स्थिरम् अकुतोभयत्वादव्ययं, ज्योतिः तेजःप्राचुर्यात्तत्पदवाच्यम्, 'तद्गुणसारत्वात्तद्व्यपदेशः' इति न्यायात्, 'अथ यदतः परो दिवो ज्योतिः' 'ज्योतिश्चरणाभिधानात्' इति च श्रुतिसूत्रे । गरुडनद्याः अहीन्द्रनगरोपशल्ये वहन्त्यास्तन्नामिकायाः स्रवन्त्याः, तटे वर्तमानं, तमालं तापिञ्छम्, भगवतः 'वा-

सुदेवतरुच्छाया नातिशीता न घर्मदा। नरकाङ्गारशमनी' 'निवासवृक्षस्साधूनाम्' इत्यादिना वृक्षौपम्ये तापनिर्वापकतया सिद्धे, श्यामलतया तद्विशेषसादृश्यसहत्वम्। अहीन्द्रनगरे य औषधाचलः तत्र स्थितम्, एकम् अद्वितीयं, गजेन्द्रं यूथपतिम्, अत्रोक्तमेकत्वं 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिना स्वसदृशाभ्यधिकवस्त्वन्तरराहित्यरूपं श्रुत्यैव निर्व्यूढम्, न पुनः पारमार्थिकपदार्थान्तरराहित्यं, तथा सति इहैव 'त्रिदशानां नाथम्' इत्यादिनिर्देशस्य, 'नित्यो नित्यानां' 'पृथगात्मानं प्रेरितारं च' इत्यादिश्रुतिशतस्य, अन्ततः स्तोत्रारम्भस्यैव च प्रतिबन्धप्रसक्तेः। अत्र त्रिदशनाथत्वेन परत्वस्वामित्वे, दाससत्यत्वेन आश्रयणसौकर्याश्रितकार्यनिर्वहणक्षमत्वे, स्थिरज्योतिष्ट्वेन तमोनिबर्हणताच्छील्यम्, गरुडनदीतटतमालत्वाहीन्द्रनगरौषधाचलैकगजेन्द्रत्वाभ्यां सौलभ्यसुखसेव्यत्वपरार्थप्रवणत्वगाम्भीर्यमङ्गलायतनत्वानि च भगवतः प्रकाशितानीति अमीषां नमनं प्रति प्ररोचकत्वात् काव्यलिङ्गमलङ्कारः। प्रबन्धे चास्मिन् प्रबन्धृगतो भगवदालम्बनः भक्तिभावः प्राधान्येन अभिव्यज्यते॥

'नमत' इति प्रकृतेः 'आदेस्तु' इति नस्य वैकल्पिकत्वाण्णत्वाभावः, नमेर्लोटि मध्यमबहुवचने 'बहौ न्तु ह मो' इति हः। बाहुलकत्वात् 'नमो द्विजरुदां वः' इति न मस्य वः। 'तिदशानाम्' इत्यत्र 'सर्वत्र लवराणाम्' इति रलोपे 'प्रायो लुक्कगचजतदपयवाम्' इति दलोपे 'यश्रुतिरः' इति दकारोपरि स्थितस्य अकारस्य यश्रुतौ, शकारस्य 'शोस्सल्' इति सत्वे षष्ठीबहुवचने 'णशामः' इति णशि 'शिति दीर्घः' इति तस्य शित्वात् पूर्वस्याचो दीर्घे च 'तिअसाण' इति सिद्धिः। 'नाथम्' इत्यत्र 'नः' इति नस्य णत्वे 'खघथधभाम्' इति थस्य हत्वे 'अमः' इति अमो मादेशे 'बिन्दुल्' इति मस्य बिन्दुः। 'सत्यम्' इत्यत्र त्यस्य 'त्योऽचैत्ये' इति चादेशे 'शेषादेशस्याहोऽचोऽस्वोः' इति द्वित्वम्। स्थिरशब्दे स्थः 'णिरप्प ढक्क ठा चिट्ठाः' इति ठादेशः। ज्योतिश्शब्दे 'अन्त्यहलो ऽश्रदुदी' इति अन्त्यहलो लोपे इदन्तवद्रूपम्। गरुडशब्दे 'हरिद्रादौ' इति रस्य, 'लल् डो ऽनुड्डे' इति डस्य च लत्वम्। नदीतटशब्दे 'दिहौ मिथस्से' इति ईकारस्य ह्रस्वः; टस्य 'टोः' इति डत्वम्। अहीन्द्रशब्दे 'हलि ङ्ञणनानाम्' इति बिन्दौ 'वर्ग्ये-

ऽन्त्यः' इति पाक्षिके नकारे 'धात्वीद्रेरस्तु' इति पाक्षिके रेफलोपे 'सन्धिस्त्वपदे' इति पूर्वोत्तरपदयोः सन्धौ 'संयोगे' इति ह्रस्वः । नगर औषधाचल इति स्थिते 'ऐच एङ्' इति औकारस्य ओकारे, 'लोपः' इति पूर्वस्याचो बहुलं लोपः, एकशब्दे 'दैवगे ऽखौ' इति कद्वित्वम् । एवमन्यत्रापि प्रक्रियास्सञ्चार्यन्ताम् । विशेषास्तु यथावसरं निरूपयिष्यन्ते । आदावत्र प्रकृतिसंबन्धप्रयुक्तस्य सर्वानर्थमूलभूतस्य अहङ्कारस्य 'नमत'इत्यनेन निरासोपक्षेपादर्थतो माङ्गलिकत्वम्। 'नकारः कीर्तिदायी स्यान्निषेधे तु विपर्ययः' 'अनिषेधार्थको नस्तु मुदम्' इत्यादिना नकारस्य शुभत्वानुशासनाद्वर्णशुद्धिः । नगणस्य 'सर्वार्थान्नगणो दद्यात् त्रिलघुर्यज्वदैवतः । हरितालसमच्छायो गणानामुत्तमोत्तमः' इति प्राशस्त्योक्तेः गणशुद्धिश्च। स्कन्धकमिदं वृत्तं 'चउमत्ता अट्ठगणा पुव्वद्धे उत्तरद्ध होइ सरूवा। सो खन्धओ विआणहु पिङ्गलपभणेइ मुद्धबहुसंभेआ' इति लक्षणात् ॥ १ ॥

अ ॥ भगवदनुरूपस्तुतिविरचनायाम् आत्मनोऽपारीणतां निरूपयन् संप्रति तादृशस्तुतेरपि भगवद्वात्सल्योद्बोधकतया चरितार्थतां सदृष्टान्तमनुसन्धत्ते—

**किङ्करसच्च थुई तुह सअम्भुगेहिणिविलासवाहित्तिमई ।**
**फणिआ बालेण मए पञ्जरसुअजम्पिअं व कुणउ पसाअम् ॥२ ॥**

छा ॥ किङ्करसत्य स्तुतिस्तव स्वयम्भूगेहिनीविलासव्याहृतिमयी ।
फणिता बालेन मया पञ्जरशुकजल्पितमिव करोतु प्रसादम् ॥

व्या॥**किङ्कर** इति॥किञ्चित्कुर्वाणाः किङ्कराः,तेषां सत्यभूत भगवन् , स्वयंभुवः धातुः या गेहिनी गृहिणी गिरां देवी, तस्याः विलासेन या व्याहृतिः प्राकृतभाषारूपा, तन्मयी तत्प्रचुरा,तदुक्तम्' को विनिन्देदिमां भाषां भारतीमुग्धजल्पितम्' इति शम्भुरहस्ये; भाषाषट्कस्य तादृशत्वेऽपि प्राधान्यात्प्राकृतमात्रे प्रयोगः, स्तुतिः स्तोतव्यगुणवर्णनम्, बालेन भवदीयगुणार्णवे पृषतमपि यथावदवगन्तुमशक्तेन, मया कुतूहलमात्रकृतपरिकरेण, फणिता सती, बालस्य मम स्थाने प्राकृतभाषाङ्गीकार इति भावः, पञ्जरशुकस्य प्रेम्णा पोषितस्य गृहशुकस्य. जल्पितं भाषितमिव, प्रसादम् अर्थाद्वत्सलस्य तव अनुग्रहोद्बोधम्, करोतु विद-

धातु, लोके हि विलासिनः शुकशारिकादीन् पोषयन्तः पाठयन्तश्च तैरनूदिताः स्वोक्तीरेव शृण्वन्तो मुदं यान्ति, न च तेषां तदर्थज्ञानं तदनुष्ठान वा अपेक्षन्ते; तद्वत् भवानपि भवदीयं मामाचार्यरूपेण अवतीर्य अनुगृह्य च भवदुपदिष्टाक्षरोद्वारमन्त्रेण प्रसादपूर्णपात्रभाजनीकरोषीति स्थाने ममायमुद्यमः इति भावः, स्तुतिशब्दे 'स्तः' इति स्तस्य थत्वे तलोपे 'श्लुगनपिसोः' इति सुलोपे 'शिति दीर्घः' इति दीर्घे च थुई इति रूपम्। व्याहृतीत्यत्र हकारोपरि स्थितस्य ऋकारस्य 'इल् कृपगे' इति इत्वम्, 'कृप नृप' इत्यारभ्य 'धृष्टोत्कृष्टसमृद्धिव्याहृतभृङ्गर्षिकृतिकृषिकाः' इति गणपाठात्; दैवादित्वात् तस्य द्वित्वम्। मयेत्यत्र 'मिमइ ममाइ मए मे ङि टा' इति टावचनेन सह मए इत्यादेशः, 'मिव पिव विव विअ व व्व इवार्थे' इति इवार्थे वादेशः, 'कृञः कुणः' इति पाक्षिकः कुणादेशः॥

अ ॥ अस्तु कामं वात्सल्योद्बोधकत्वम्, अथापि दोषाविला भवदुक्तिः कथं मत्कीर्तिं स्पृशतु?—इतिशङ्कां परिहर्तुं दृष्टान्तमुपादत्ते—

**मइलं वि भासिअं मह किङ्करसञ्च तुह कित्तिजोण्हापसरे ।**
**लग्गं लहउ विसुद्धिं रच्छासलिलं व तिवहआसोत्तगअं ॥ ३ ॥**

छा ॥ मलिनमपि भाषितं मम किङ्करसत्य तव कीर्तिज्योत्स्नाप्रसरे ।
लग्नं लभतां विशुद्धिं रथ्यासलिलमिव त्रिपथगास्रोतोगतम् ॥

व्या॥ **मइलमिति** ॥ मलिनं स्वभावतः सदोषमपि, मम भाषितं प्रकृतस्तुतिरूपं मद्वचनं, तव भवतः कीर्तिः यश एव ज्योत्स्ना चन्द्रिका, यशसि धवलतायाः कविसमयसिद्धत्वात् तापनिर्वापकत्वाच्च चन्द्रिकासाधर्म्यम्। तस्याः प्रसरे प्रसरणे, लग्नम् अन्तर्भूतं तद्वर्णनासक्तं तेन सह मिलितं च, त्रिपथगायाः भुवनत्रितयेऽप्येकौवीभूतायाः अद्ययावदनुच्छिन्नसन्तानायाः मन्दाकिन्याः, स्रोतः ओघं, गतं प्राप्तं, रथ्यासलिलम् आविलमशुचि च रथ्याजलमिव, विशुद्धिं वर्णतो गुणतश्चावदातत्वं, लभतां प्राप्नोतु, स्वतो मलिनस्याशुचेरपि रथ्याम्बुनः सौरसैन्धवझरान्तर्भावेनेव मद्वचसो दोषदूषितस्यापि भवद्गुणौघावगाहादनिर्वचनीया शुद्धिस्संपद्येतेति। इदं स्तुतिरूपं तदारम्भसमर्थनरूपं च भवति, 'कवेरल्पापि वा-

ग्वृत्तिर्विद्वत्कर्णावतंसति । नायको यदि वर्ण्येत लोकोत्तरगुणोत्तरः' इति सामान्याकारेण 'तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः' इति विशेषाकारेण चेदमेवोक्तम् । 'मलिनधृतिपूर्ववैडूर्याणां मइलदिहिपुरिमवेरुलिआः' इति मलिनशब्दस्य मइलादेशः ॥ ३ ॥

अ ॥ नित्यानिर्दोषासु सतीषु श्रुतिषु सदा स्तुतिपरासु कथमस्याः भवदीयायाः स्तुतेरुपयोगः ?—इत्याशङ्क्य परिहरति—

**तत्थरिणएण ठविआ सोहउ तिअसाण णाह तुज्झ समाए ।**
**वन्दित्तणमहिआणं मज्झम्मि सुईण बालिसा मज्झ थुई ॥ ४ ॥**

छा ॥ त्रस्तरीनयेन स्थापिता शोभतां त्रिदशानां नाथ तव समाजे ।
वन्दित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः ॥

व्या॥ **तत्थरी**ति ॥ तव समाजे सभायां, वन्दित्वेन मङ्गलपाठकत्वेन, महितानां सम्भावितानां श्रुतीनां निगमानाम् मध्ये, बालिशा अप्रगल्भा मम स्तुतिः, त्रिदशानां नाथ त्रस्तरीनयेन विदूषकसाम्येन स्थापिता उचितविनियोगवेदिना भवता परित्यागविमुखेन अधिकारिता सती, शोभतां प्रकाशताम्, विडम्बनैकोद्यमस्य विदूषकस्येव सभायां विनोदैकसहकारित्वं मदीयस्तोत्रस्येति भावः; 'विद्वांसः कवयो भट्टाः गायकाः परिहासकाः । इतिहासः पुराणं च सभासप्ताङ्गलक्षणम्' इति परिहासकानामपि सभाङ्गत्वादपरिहार्यत्वम् । 'ठविआ' इत्यत्र 'न वाऽव्ययोत्खातादौ' इति स्थाधातोराकारस्य ह्रस्वः । 'तुज्झ' इति 'तुब्भ, उब्भ, उय्ह, तइ, तुहं, तुह, तुह, तुव, तुम, तुमे, तुमाइ, तुमो, दे, ते, दि, तु, इ, ए, उ, सा' इति तुब्भादेशे 'वा ब्भो म्हज्झौ' इति ज्झादेशे च सिद्धम्, 'ध्यह्योर्झः' इति ध्यस्य झादेशे मध्यशब्दस्य 'मज्झ' इति रूपम्, 'ङेर्म्मिर्' इति ङेर्म्मिरादेशः, रित्वात् द्वित्वम्, 'मज्झ' इत्यत्र 'अम्ह मज्झं मज्झ मइ मह महं मे च ङसा' इति मज्झादेशः ॥ ४ ॥

अ ॥ उक्तमात्मनोऽसामर्थ्यम्, तन्निबन्धनां स्तुतिरचनायाः दोषाविलतां भङ्ग्यन्तरेण निराकरोति—

**अम्ह गुरूणं अच्चुअ जीहासीहासणम्मि लद्धपइट्ठो ।**
**पडिवाइअपरमट्ठो वारेसि अपण्डिअत्तणं अम्हाणं ॥ ५ ॥**

छा ॥ अस्मद्गुरूणामच्युत जिह्वासिंहासने लब्धप्रतिष्ठः ।
प्रतिपादितपरमार्थो वारयस्यपण्डितत्वमस्माकम् ॥

व्या ॥ **अम्ह** इति ॥ हे अच्युत त्वम्, अस्माकं ये गुरवः अज्ञातज्ञापनेन विहितोपकाराः वादिहंसाम्बुदाचार्यप्रभृतयः; तेषां जिह्वा रसज्ञैव सिंहासनं जगद्रक्षणयोग्यं भद्रपीठं, तस्मिन्निति जात्यभिप्रायमेकत्वम्, गुरूणामिति 'इमान्येवाङ्गानि कदाचित्स्वातन्त्र्येण विवक्षितानि भवन्ति' इति महाभाष्यकारवचनात् पूजायां बहुत्वं वा, लब्धा आसादिता प्रतिष्ठा स्थितिः येन तथोक्तस्सन्, प्रतिपादितः प्रसादितः परमः निरतिशयोत्कर्षशाली अर्थः तत्त्वहितपुरुषार्थादिस्वरूपं येन तथाभूतः, अस्माकं तुल्यावस्थान्मादृशोऽन्तर्भाव्य बहुवचनम्, अपण्डितत्वम् अनभिज्ञत्वं प्रवचनादिविषयकमकौशलम्, वारयसि प्रतिबध्नासि; अनेन सदाचार्यद्वारेण भवतैवानुशिष्टस्य पामरस्यापि मम कथं त्वद्रूपगुणादिवर्णने भवत्वशक्तिरिति, तदिदं च मम कौशलं भवत्प्रवर्तितमेवेति भवत्करुणैवात्र मत्प्रवृत्तिनिर्वहणादिहेतुरिति, तेन भवत्परतन्त्रस्य मे गुणदोषयोर्भवानेव प्रमाणमिति च ध्वनति । जिह्वाशब्दस्य 'खलाम्' इत्यादिना वलोपे 'शोर्लुतयवरशोः' इत्यादिना शषसानामेव दीर्घविधानेऽपि बहुलाधिकारादशोरपि आद्यस्याचो दीर्घः इति त्रिविक्रमदेवोक्तेः, 'जिह्वायाः वलोपोत्तरं दीर्घो वाच्यः' इति वार्तिकाद्वा, सिंहशब्दे 'विंशतिषु त्या श्लोपन्र' इति बिन्दोर्लोपः, 'लब्ध' इत्यत्र वबयोरभेदात् 'खलामधश्च' इति बस्य लोपः, 'प्रतिष्ठाशब्दस्य 'प्रतिगेऽप्रतीपगे' इति पर्युदासात् तस्य डत्वाभावे लोपः, 'प्रतिपादित' इत्यत्र तु प्रतिगणपाठात् डः, 'विसंस्थुलास्थ्यधनार्थे' इति धनेतरवाचिनोऽर्थशब्दस्य स्तोः ठः; 'अस्माकम्' इत्यत्र 'अम्हे अम्हो' इत्यादिना अम्हादेशे 'क्त्वासुपोस्तु सुणात्' इति बिन्दौ च 'अम्हाणं' इति रूपम् ॥ ५ ॥

अ ॥ आचार्यजिह्वासिंहासनस्थितिरसिकताप्रस्तावेन सद्वारकानुग्रहवर्णनापेक्षया कुतो निजहृदयस्थितिरेव भगवतो नोपात्तेति शङ्कामपाकुर्वन् स्तौति—

**हिअएसु देसिआणं जह्नविलहरीसु पुण्णचन्दो व्व फुडो ।**
**कलुसजलेसु व हंसो कसायकबुरेसु ठासि अच्चुअ ण खणं ॥६॥**

छा ॥ हृदयेषु देशिकानां जाह्नवीलहरीषु पूर्णचन्द्रइव स्फुटः ।
कलुषजलेष्विव हंसः कषायकर्बुरेषु तिष्ठस्यच्युत न क्षणम् ॥

व्या ॥ **हिअएसु** इति॥ अच्युत,अनेन पापिनोऽपि नान्ततः परित्यजसीति व्यज्यते, जाह्नव्याः लहरीषु प्रवाहेषु 'लहरी तरङ्गः प्रवाहो वा'इति देशीयसूत्रात्,पूर्णचन्द्रइव, अनेन आचार्यचेतसां नैर्मल्यं भगवतः प्रसादसुमुखत्वम् आनन्दावहत्वं च व्यज्यते,देशिकानाम् आचार्याणाम्,हृदयेषु, स्फुटः निर्मलत्वात्, कलुषेषु आविलेषु जलेषु, हंस इव, कषायेन पापसंबन्धेन, कर्बुरेषु किम्मीरेषु जनेषु हृदयेषु वा, क्षणं क्षणकालमपि, न तिष्ठसि तादृशाकारेण न वर्तसे, भगवदनधिष्ठितस्य वस्तुन एवाभावादेवम् , इदं च 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'सर्वस्य चाहं हृदि सन्निविष्टः' इत्यादिश्रुतिस्मृतिदर्शनात्। आविलं जलं न हंसाः पिबन्तीति कवयः, अतो मादृशामाचार्योपदेश एव शरण्य इति, तत्रापि तवैव कार्यकारित्वमिति चाभिप्रायः; क्षणशब्दे 'क्षः'इति क्षकारस्य खादेशः ॥

अ ।। कुत एवमित्यत आह—

**आअममेत्तपमाणो आगोविअणं पआसणिअमाहप्पो ।**
**सद्दहिआहिअअसुलहो दूरं मुअसि णअसच्च डोलाअन्ते ॥ ७॥**

छा ॥ आगममात्रप्रमाणः आगोपीजनं प्रकाशनिजमाहात्म्यः ।
श्रद्दधद्धृदयसुलभो दूरं मुञ्चसि नतसत्य डोलायमानान् ॥

व्या॥ **आअम** इति॥ भो नतसत्य श्रद्धातिशयपूर्वकं भजतां सत्य,भक्तेष्वेव दयया निजं वैभवं प्रकाशयसीति भावः,त्वम् आगोपीजनम् अनभिज्ञानां निदर्शनभूते गोपकुले जाता अबलाश्चाभिव्याप्य,प्रकाशम् अतिरोहितं निजं माहात्म्यं वैभवं यस्य तथाभूतः, कृष्णावताराभिप्रायेणेदम् ;तथाविधोऽपि, आगममात्रप्रमाणः प्रत्यक्षानुमानयोरतीन्द्रियविषयगोचरीकरणशक्तिविरहात्, वेदस्य 'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ' इति स्मृतेः अं-

नितरंगोचरार्थ एव शक्तेश्च निगमैकनिर्णेयनिजवैभवोऽसि, कथं प्रकाशमाहात्म्यस्य वेदैकावसेयत्वमिति विरोधः, निरङ्कुशस्वतन्त्रस्य निरुपाधिकदयावशात् क्वचित्प्रकाशनमिति परिहारादत्र विरोधाभासः, किञ्च श्रद्दधतां श्रद्दधानानां यानि हृदयानि तैः सुखेन लभ्यः मृदितकषायाणां भगवत्करुणाविषयतया सुलभः, दोलायमानान् गुरूपदिष्टार्थेष्वविस्रम्भेण संशयानान्, दूरं दूरे, ङ्पोऽस्' इति सप्तमीस्थाने द्वितीया, मुञ्चसि त्यजसि उपेक्षस इति भावः ; तदुक्तम् 'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ' इति । मात्र इत्यत्र 'मात्रशब्दे वाच्यः ' इत्यादेरात एत्वम्, माहात्म्यशब्दे'वाऽऽत्मभस्मनि पः'इति पकारादेशः,'धोदहश्रदः' इति श्रदित्यव्ययात्परस्य दधातेर्दहादेशः । हृदयशब्दे 'इल् कृपगे' इति इकारो नित्यः, ' मुच्लृ मोक्षणे' इति धातोः 'हलोऽक्' इत्यकि ' मुअसि' इति रूपम्, डोलाशब्दात् कर्तुः क्यङि 'नियमो नात्मनेभाषापरस्मैपदिनोरिह' इति वचनात् पदनियमविरहाच्छतरि अकि 'शस्येत्' इति एकारः ॥ ७॥

अ ॥ श्रुतयो वन्दिभावमुपेत्य भवन्तं स्तुवन्तीति प्रसक्तं स्तोत्रप्रकारमनुवदति—

**संखविअसअलहेअं सरणागअसच्च सच्चणाणाणन्दं ।**
**उल्लङ्घिअतिविहंतं उवणिसआणं सआइ गाअन्ति तुमं ॥ ८ ॥**

छा ॥ संक्षपितसकलहेयं शरणागतसत्य सत्यज्ञानानन्दम् ।
उल्लङ्घितत्रिविधान्तमुपनिषदां शतानि गायन्ति त्वाम् ॥

व्या ॥ **संखविअ** इति ॥ त्वाम् उपनिषदाम् उप भगवतस्समीपे निषीदन्ति साक्षात्तत्स्वरूपगुणादिवैभवं प्रकाशयन्तीत्युपनिषदः, अनेन पूर्वभागोक्तकर्माराध्यवस्तुसमर्पकतया भगवति प्रवृत्तिरुक्ता, शतानीति बहुत्वेन श्रूयमाणानां तत्परत्वानपायात् गतिसामान्यन्यायेन इतरासामप्यन्यपरत्वं वार्यते, सम्यक् सवासनं क्षपिताः सकलाः हेयाः दोषाः येन तम्, अस्पृष्टहेयगन्धम् अपहतभक्तदोषं वा, सत्यौ सततैकरूपौ ज्ञानानन्दौ यस्य तादृशं, जीववत्कादाचित्कतिरोधानस्याप्यविषयत्वं ज्ञानानन्दयोस्तदीययोरनेनोच्यते,उल्लङ्घितः अतिक्रान्तः त्रिविधः देशकालवस्तुरूपोपाधित्रयनियमितः अन्तःपरिच्छेदो येन तं, देशकालवस्तुषु नियमेन व्याप्तमिति

यावत्, गायन्ति आम्रेडयन्ति, प्रवाहतो नित्यत्वविवक्षया वर्तमानप्रत्ययः, अत्र विशेषणैः भगवतः क्षराक्षरविलक्षणत्वमुक्तमिति वेद्यम्। प्रकृतेः स्वरूपान्यथाभावरूपविकारास्पदत्वात् जीवस्य स्वभावान्यथाभावरूपविकाराश्रयत्वात् परिच्छिन्नत्वाच्च नेदृशत्वम्। ज्ञानशब्दे ज्ञकारस्य 'ज्ञम्नोः' इति णादेशः ॥ ८ ॥

अ ॥ तथा—

**कुणसि ण कीरसि केण वि ठावेसि ण संठविज्जसि अणण्णठिओ।**
**हरसि णिहिलं ण हीरसि अहिन्दणअरिन्द अणहजोइफुरन्तो ॥ ९ ॥**

छा ॥ करोषि न क्रियसे केनापि स्थापयसि न संस्थाप्यसेऽनन्यस्थितः।
हरसि निखिलं न ह्रियसेऽहीन्द्रनगरेन्द्र अनघज्योतिस्स्फुरन् ॥

व्या॥**कुणसि** इति॥अहीन्द्रनगरेन्द्र,त्वं निखिलं कार्यभूतं प्रपञ्चं करोषि सृजसि, केनापि न क्रियसे,अनन्यकार्यत्वात्तवेति भावः; किञ्च अनन्यस्थितः स्वे महिम्नि प्रतिष्ठितत्वादनितरविधृतः, त्वं स्थापयसि सङ्कल्पमात्रेण धारयसि,न धार्यसे, अपि च निखिलं हरसि लयकाले कारणे स्वस्मिन् विलीनं करोषि,न ह्रियसे,अनघेन संकोचविकासपरायत्तत्वादिक्लेशासंसृष्टेन ज्योतिषा तेजसा स्फुरन् प्रकाशमानः इति सर्वसमर्थकमिदम्,सृष्टिस्थितिसंहारेषु कर्तृत्वस्वाच्छन्द्यमेव भवतो न कर्मत्वमिति फलितोऽर्थः; अनघज्योतिरित्यादौ 'तस्य भासा सर्वमिदं विभाति' इत्यादिकं प्रमाणम्। 'कृञः कुणः' इति कुणादेशः ; कृञो हृञश्च भावकर्मार्थे 'ईर हृकृतृज्ञाम्' इति पाक्षिक ईरः,तत्सन्नियोगेन यको लुक्च, 'ष्पस्पोः'इति फादेशे 'शतृशानचोः'इति न्तादेशे च 'फुरन्तो' इति रूपम् ९ ॥

**अणुपमिअस्स वि अच्चुअ सत्ती तुह सअलधारणाइवहुत्ता।**
**तेण पडिवत्थुपुण्णो सुव्वसि अपडिहअणिअठिई सव्वगओ ॥**

छा ॥ अणुप्रमितस्याप्यच्युत शक्तिस्तव सकलधारणादिप्रभूता।
तेन प्रतिवस्तुपूर्णः श्रूयसेऽप्रतिहतनिजस्थितिः सर्वगतः ॥

व्या ॥ **अणु** इति॥ अच्युत,अणुप्रमितस्य 'एषो ऽणुरात्मा चेतसा वेदितव्यः' इत्यणुपरिमाणतयोक्ते जीवात्मन्यनुप्रवेशेन ततोऽपि सूक्ष्मत्वेन'अणोरणीयान्'इत्या-

म्नातविभवस्यापि भवतः, शक्तिः, सकलधारणादिप्रभूता सकलानां त्रिविधचेतनाचेतनानां धारणादौ विधरणरक्षणादौ प्रभूता पर्याप्ता 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्याम्नातस्य हरेर्विभुत्वं तत्तद्विधरणादिप्रयोजकमिति भावः । तेन तादृशदशायामप्यनुपहतशक्तिमत्त्वेन, सर्वगतः सर्वपदार्थव्यापी, अप्रतिहतनिजस्थितिः अप्रतिबद्धनिजावस्थानः, प्रतिवस्तुपूर्णश्च, त्वं श्रूयसे, तथा च श्रूयते— 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्'—इति । वि इत्यत्र 'अपेः पदात्' इति पदात्परस्यापेरकारलोपः, पस्य वश्च, प्रभूतशब्दस्य तैलादित्वाद्व्यञ्जनद्वित्वम्, 'प्रभूते वः' इति पस्य वश्च, 'भावकर्मणि तु वर्यंग्लुक' इति श्रृणोतेर्भावार्थे कर्मार्थे च वागमे तस्य रित्वात् द्वित्वम्, यको लुक् च ॥ १० ॥

**सअलाण धरणणिअमणसामित्तणणिअमसंठिओ सव्वतणू ।**
**सुव्वसि अच्चुअ सव्वो सइदंसिअकज्जकारणत्तणकव्वुरो ॥**

छा ॥ सकलानां धरणनियमनस्वामित्वनियमसंस्थितस्सर्वतनुः ।
श्रूयसेऽच्युत सर्वः सदादर्शितकार्यकारणत्वकर्बुरः ॥

व्या॥**सअलाण** इति॥अच्युत सकलानां जगतां,धरणं स्थापनं,नियमनं शासनं, स्वामित्वं स्वप्रतिसम्बन्धित्वम्,एषां नियमे संस्थितः, तथा सर्वतनुः सर्वशररिकः, सदा सततमपि दर्शिताभ्यां प्रकाशिताभ्यां कार्यत्वकारणत्वाभ्यां कर्बुरश्च सन्, अत एव सर्वः इति श्रूयसे, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' 'सर्वत्र प्रसिद्धोपदेशात्' 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादिकमत्र प्रमाणम् । एकस्यैव तस्य कार्यत्वं कारणत्वं च स्थूलचिदचिद्विशिष्टत्वसूक्ष्मचिदचिद्विशिष्टत्वाभ्यामिति सुगमं निगमान्तनीतिविदाम् । स्वामित्वेत्यत्र त्वप्रत्ययस्य 'त्वस्य तु डिमात्तणौ' इति तणादेशः, सदेत्यत्र 'इत् सदादौ' इतीकारः, दर्शितेत्यत्र वक्रादित्वाद्बिन्दुः ॥ ११ ॥

अ ॥ कथमेकस्योपादानत्वं निमित्तत्वं चेत्यत आह—

**पुरिसपहाणसरीरो भुवणाणं होसि अच्चुअ उवाआणम् ।**
**णिअसंकप्पसणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ॥ १२ ॥**

छा ॥ पुरुषप्रधानशरीरो भुवनानां भवस्यच्युतोपादानम् ।
निजसङ्कल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ॥

व्या॥**पुरिस** इति॥अच्युत अद्भुता अनितरसाधारणत्वेन विस्मयाधायिनी शक्तिः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'इत्याम्नातं सामर्थ्यं यस्य सः त्वं,पुरुषः जीवः,प्रधानं प्रकृतिः, एतदुभयं शरीरम् अविनाभूतत्वात्परतन्त्रत्वादिना च यस्य सः तथोक्तस्सन्, 'यस्य मृत्युः शरीरं' 'यस्याऽत्मा शरीरम्'इत्यादिश्रुतेः;भुवनानां जगतां,भवतीति भुवनमिति व्युत्पत्त्या सत्यत्वमुच्यते,बहुवचनेन असङ्कोचन्यायेन च भुवनान्तराणामीश्वरान्तरकार्यत्वं वार्यते, उपादानं सविकारकारणं भवसि, नित्यनिर्विकारस्य कथमीशितुरुपादानत्वमित्यस्योत्तरमिदम्—निर्विकारत्वं भगवत्स्वरूपस्य,उपादानत्वं शरीरभूतचेतनाचेतनद्वारा —इति। तर्हि निमित्तकारणाधीनत्वादुपादानस्य किं वा तादृशमिति शङ्कां परिहरति—निजेति । निजेन स्वकीयेनेति कारणान्तरवारणाय, संकल्पेन 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिना आम्नातेन, सनाथः, निमित्तत्वं निमित्तकारणत्वमपि वहसि, अनेन वैशेषिकादीनां भिन्नोपादाननिमित्तत्ववादो न प्रामाणिक इत्युक्तं भवति, अत्रार्थे उपपादकम् अद्भुतशक्तिः इतीदम्, तथा च श्रूयते—'यथोर्णनाभिः सृजते गृह्णते च' इति । पुरुषशब्दे रुकारस्य 'रो भ्रुकुटीपुरुषयोरित्' इतीकारः ॥

**विसमगुणंकुरपअर जलं व सामण्णकारणं तुह केली ।**
**णिअकम्मसत्तिणिअआ अच्चुअ बम्हाइठावरन्तविसेसा ॥१३॥**

छा ॥ विषमगुणाङ्कुरप्रकरे जलमिव सामान्यकारणं तव केलिः ।
निजकर्मशक्तिनियता अच्युत ब्रह्मादिस्थावरान्तविशेषाः ॥

व्या॥**विसम** इति॥विषमाः मिथो निम्नोन्नताः ये गुणाः सत्त्वरजस्तमांसि ते अङ्कुरा इव तेषां प्रकरे तत्तद्व्यक्तिगतानां समूहे,तव केलिः भवतो लीला'लोकवत्तु लीला

कैवल्यम्' इति सूत्रिता, जलमिव जलेन तुल्यं, सामान्यकारणं साधारणकारणं भवति, तत्र प्रतिनियतं कारणं तु किमित्यत आह—निजेति । ब्रह्मादयः चतुर्मुखोपक्रमाः स्थावरान्ताः स्थावरावमानाश्च, विशेषाः असाधारणाकाराः, निजकर्मशक्तिनियताः आत्मीयानादिकर्मप्रतिनियतगतयः, अतस्ते वैषम्यनैर्घृण्यदोषप्रसक्तिर्नास्तीति भावः । तथा चोक्तं श्रीविष्णुपुराणे 'निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि । प्रधानकारणीभूताः यतो वै सृज्यशक्तयः ' इति । ब्रह्मशब्दस्य ' श्मष्मस्मह्मामस्मरश्मौ म्हः' इति म्हादेशः ॥ १३ ॥

**पुरिसा तुज्झ विहूई अच्चुअ लच्छी अ इत्थिआ लण्णाओ ।**
**णत्थि परं तुज्झाणं सा वि सिरी होइ तुज्झ किं उण इअरं ॥**

छा ॥ पुरुषास्तव विभूतिरच्युत लक्ष्म्याः स्त्रीसंज्ञाः ।
नास्ति परं युवयोः सापि श्रीर्भवति तव किं पुनरितरत् ॥

व्या॥**पुरिसा** इति॥अच्युत, जगत्सु, पुरुषाः पुमांसः तव विभूतिः अंशः, भवदधिष्ठिता इति यावत्, स्त्रीसंज्ञाः लक्ष्म्याः, विभूतिरित्यनुकृष्यते, युवयोः जगदधिष्ठात्रोः परम् अन्यत् नास्ति, भवदनधिष्ठितं वस्त्वप्रसिद्धं, निरूपितदिशा लक्ष्मीनारायणयोरेव सर्वापाश्रयत्वात्, तदुक्तं भगवता पराशरेण 'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः । स्त्रीनाम्नी श्रीश्च विज्ञेया नानयोर्विद्यते परम्' इति, एवं स्थिते सापि श्रीः व्युत्पत्तिवृत्तेन चेतनैराश्रीयमाणा समाश्रिता भवन्तमिति च निरुच्यमानाभिधाना, तव त्वदीया, भवति संबन्धमात्रे षष्ठीयम्, अतः अपरं किं किमवशिष्यते भवन्महिम्नि वक्तव्यम्, 'अस्येशाना जगतो विष्णुपत्नी' 'श्रियः श्रीश्च भवेदग्र्या' 'कः श्रीः श्रियः' 'त्वां हि श्रियः श्रियमुदाहुरुदारवाचः' इत्यादिकमत्र प्रमाणम् । लक्ष्मीशब्दे अधोवर्तमानस्य मकारस्य लोपे 'स्पृहादौ' इति छत्वे आदेशद्वित्वे 'पूर्वमुपरि वर्ग्यस्य युजः' इतिचछकारविशिष्टं रूपम्, ततो ङसः 'टाङिङसाम्' इति शिदकारः, स्त्रीशब्दस्य 'स्त्रीभगिनीदुहितृवनितानामित्थीबहिणीदूआविलआः' इति इत्थीत्यादेशे 'आदीतस्सोश्च' इत्याकारः, न अस्ति इति स्थिते 'लोपः' इत्यचोऽचि बहुलं लोपः, 'तिङात्थिः' इति तिङा सह अत्थि इत्यादेशः, श्रीशब्दस्य 'हर्षामर्षश्रीह्री' इत्यादिना अन्त्यहलः प्रागित्वम् । १४ ॥

**ण हु तुह सरिसब्भहिआ णाह तुमं एव्व सव्वलोअसरण्णो ।**
**एआत्र णाणसारं इअ मुणिउं तिअसणाह इअरविइन्ता ॥ १५ ॥**

छा ॥ न खलु तव सदृशाभ्यधिकाः नाथ त्वमेव सर्वलोकशरण्यः ।
एतावज्ज्ञानसारमिति ज्ञातुं त्रिदशनाथेतरविचिन्ता ॥

व्या॥ **ण हु** इति॥ नाथ अविशेषेण निखिलभुवननियामक,तव सदृशाः अभ्यधिकाश्च, न खलु न सन्तीति निश्चितम् ,यत एवं ततः सर्वेषां लोकानां शरणे रक्षणे साधुः, त्वमेव नान्यः कश्चिदपि , तवैव लोकातिशायित्वात् अतिशयस्यैवोपकारे कार्यकारित्वाच्च; एतावत् इयन्मात्रं. ज्ञानस्य स्वपरस्वरूपविषयस्य सारं स्थिरमंशम्, इति याथार्थ्येनैवं, ज्ञातुम् अवगन्तुम्, इतरेषां चिदचित्तत्वादिविषयकशास्त्राणां विचिन्ता विमर्शः, भवति विविधशास्त्रतत्त्वनिरूपणस्येदमेकमेव फलम्, यत्—'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' "न तत्समश्चाभ्यधिकश्च दृश्यते' 'एष ह्येवानन्दयाति ' ' सकलफलप्रदो हि विष्णुः ' इत्यादिनाऽभिहितं भगवतस्तव निस्समाभ्यधिकत्वशरण्यत्वादिविषयकं ज्ञानम्, संसिद्धे तस्मिन् मौलिभूते कृतं शास्त्रचिन्तारोमन्थैः, असंसिद्धे चास्मिन् वृथैव शास्त्रान्तराभ्यास इति भावः, अनेन निरीश्वरसाङ्ख्यादीनां तत्त्वगुणनिका निष्फलेति निराकृता भवति, अत्र 'हुखुनिश्चयविस्मयवितर्केषु ' इति हु निश्चये, 'इतौ तो वाक्यादौ' इतीतेस्तकारस्य अत्वम्, 'जाणमुणौ' इति जानातेर्मुणादेशः ॥ १५ ॥

**भाइ फणिंदउराहिव पडिवालंतेसु पाअडवहुत्तफला ।**
**अवि दुहिणप्पमुहेहिं आणत्ती तुह अलंघणीअपहावा ॥ १६ ॥**

छा ॥ भाति फणीन्द्रपुराधिप प्रतिपालयत्सु प्रकटप्रभूतफला ।
अपि द्रुहिणप्रमुखैराज्ञप्तिस्तवालङ्घनीयप्रभावा ॥

व्या ॥ **भाइ** इति ॥ फणीन्द्रपुराधिप अहीन्द्रनगरनाथ, द्रुहिणप्रमुखैरपि शङ्कितैश्वर्यैः पितामहादिभिरपि, किमुतेतैरिति भावः, अलङ्घनीयः विपक्षे प्रत्यवायबहुलतयाऽनतिवर्तनीयः प्रभावः महिमा यस्यास्तादृशी, तव, आज्ञप्तिः विधिनिषेधशास्त्ररूपा, प्रतिपालयत्सु अनुरुन्धानेषु, वैषयिकाधिकरणत्वविवक्षया

सप्तमी । प्रकटानि प्रभूतानि भूयांसि च फलानि यस्यास्तथोक्ता च, भाति, ब्रह्मादीनामपि कर्मवशतया तदाज्ञारूपश्रुतिस्मृत्यतिक्रमो निरयहेतुः, तदनुपालनमशेषाणां फलाय कल्पते इति सर्वङ्कषो भगवन्महिमा, यदाह भगवान्-- 'श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते। आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः'—इत्यादिना । प्रकटशब्दे 'तु समृद्ध्यादौ' इति पाक्षिको दीर्घः ॥

**णिअमविहीणपउत्ती सव्वाण वि दाससच्च उद्दिसिअ तुमं ॥**
**सद्धणिमंतिअबम्हणसमाहिसिद्धं लहंति तिअसा भुत्तिं ॥ १७ ॥**

छा ॥ नियमविधीनां प्रवृत्तिः सर्वेषामपि दाससत्योद्दिश्य त्वाम् ।
श्राद्धनिमन्त्रितब्राह्मणसमाधिसिद्धां लभन्ते त्रिदशा भुक्तिम् ॥

व्या ॥ **णिअम** इति ॥ अच्युत, सर्वेषां नियमविधीनां शास्त्रनियमितानां विधानानां, प्रवृत्तिः आरम्भः, त्वामुद्दिश्य नियन्तुस्तव प्रसादनाय, केषांचिद्रुद्रेन्द्रादिवाचिनामपि पदानां मन्त्रेषु दर्शनात्कथमिदमिति चेदाह—त्रिदशाः मन्त्रेषु पठिताभिधानाः देवाः, श्राद्धेषु पितृदेवतोद्देशेन विधीयमानेषु, निमन्त्रिताः भोजने व्यापारिताः ये ब्राह्मणाः, तेषां समाधिना धर्मारोपणेन तत्तौल्येन सिद्धां संपन्नां भुक्तिं हविरुपभोगं, लभन्ते प्राप्नुवन्ति, न हि जगति श्राद्धनिमन्त्रितब्राह्मणोद्देशेन श्राद्धमुपक्रम्यते, अपि तु पित्राद्युद्देशेन, तथाऽपि भोजनं ब्राह्मणानामेवेति यथा, तथाऽत्र भवत एव सकलकर्मसमाराध्यत्वम्, देवतानां तु हविर्भोजनमात्रमिति भावः ॥ १७ ॥

**आरज्झतिअसविलए अच्चुअ णिच्चं ण ठासि जइ णाम तुमं ।**
**कम्माण कप्पिआणं काही कप्पन्तरेसु को णिव्वेसं ॥**

छा ॥ अराध्यत्रिदशविलये ऽच्युत नित्यं न तिष्ठसि यदि नाम त्वम् ।
कर्मणां कल्पितानां करिष्यति कल्पान्तरेषु को निर्वेशम् ॥

व्या ॥ **आरज्झ** इति ॥ अच्युत आराध्यानां तत्तत्कर्मसमाराध्यतया पामरैरभिमतानां, त्रिदशानां, देवजातिजानां विलये प्रलयेऽपि, त्वं नित्यं प्रलयेऽप्यविलीयमानतया सततमपि, तिष्ठसि न यदि नाम तवावस्थानमसंभावितं चेत्, कल्पितानाम् आत्मनाऽनुष्ठितानां, कर्मणां, कल्पान्तरेषु आगामिषु कल्पेषु, निर्वेशं

फलानुभवं कः को वा करिष्यति, अपूर्वादीनामचेतनतया, स्वस्य स्वानुग्रहस्य विरुद्धतया, चेतनैरनुष्ठिताना कर्मणां विनष्टतया च, इष्टानिष्टफलदाने प्रगल्भः कश्चन चेतनः एवाङ्गीकार्यः, तेन च सर्वानुग्रहनिग्रहयोः स्वतन्त्रेण भवितव्यम्, अतः स एव सवश्वरः इति स्थिते तवैवानन्यथासिद्धत्वेन कारणवाक्यैराम्नातत्वात् त्वदन्येषां 'न ब्रह्मा नेशानः' इत्यादिना स्फुटमेव प्रलयसमये विलीनत्वोक्तेश्च, त्वमेक एव नित्यसिद्ध इति भावः,अतः कर्मवश्यानां देवानां कर्माराध्यतापरिग्रहे कर्मणां फलवत्त्वनियमो न स्यादित्युपक्षिप्तम् । अनन्तगरुडादीनां सूरीणां जीवात्मनां प्रकृतेश्च नित्यत्वं भगवत्संकल्पप्रयोज्यमेव, न स्वतः इति न तत्फलदाने स्वातन्त्र्यमर्हतीति नोक्तविरोधः । अन्त्यहलो लोपात् कर्मशब्दस्य अदन्तवद्रूपम्, 'भविष्यति हिरादिः' इति कृञो भविष्यदर्थे हिआदेशे बहुलाधिकारादेकपदेऽपि सन्धौ काही' इति रूपम् ॥ १७ ॥

**कप्पेसि कंखिआइं कप्पदुमो व्व सिरिकंचणलआसहिओ ।**
**णअसत्त सइफलाइं णिअछाहिणिव्वुण्णणिच्चतावतिहुवणो ॥१८॥**

छा ॥ कल्पयसि काङ्क्षितानि कल्पद्रुम इव श्रीकाञ्चनलतासहितः ।

नतसत्य सदाफलानि निजच्छायाविश्रान्तनित्यतापत्रिभुवनः ॥

व्या ॥ **कप्पेसि** इति ॥ नतसत्य त्वं, श्रीकाञ्चनलतया कनकमय्या लतयेव स्थितया श्रिया सहितः अनुसृतः, निजच्छायायाम् आत्मपालने अन्यत्रानातपे च 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोर्दीप्तिसच्छायापङ्क्तिषु स्त्रियाम्' इति मेदिनी, विश्रान्तम् अपनोदितश्रमं, सांसारिकदुःखघर्मतापयोर्ग्रहणम्, नित्यतापम् इतः प्राक्कदाचिदप्यनपोढदुःखं, त्रिभुवनं यस्य तादृशः, सदाफलानि अव्यभिचरितलाभानि काङ्क्षितानि अभीष्टानि, पक्षे सदेति भिन्नं पदम्, काङ्क्षितानि अपेक्षितानि कल्पद्रुमत्वात् अभीष्टनानाजातिजनितानि संख्यानवच्छिन्नानीति वा, फलानि सदा कालनियममन्तरेण कल्पयसि। श्लेषानुप्राणितेयमुपमा,श्रीकाञ्चनलतेत्यंशे उपमारूपकयोस्संकरश्च, न चात्र कल्पद्रुम इवेत्युपमायाः विनिगमकतया कथं रूपेकापमान्यतरप्रकारकः संशयः इति वाच्यम्,

'निजच्छायाविश्रान्तनित्यताप' इत्यादिषु उपमायाः निर्वाहविरहेण कविसंरम्भविश्रान्तेः प्रकाशाभावात्; 'वासुदेवतरुच्छाया नातिशीता न घर्मदा। नरकाङ्गारशमनी सा किमर्थं न सेव्यते' इति वचनमस्योत्तम्भकम्, कल्पद्रुमोपमायाः काङ्क्षितवितरणशीलत्ववर्णनं प्रति समर्थकत्वात् काव्यलिङ्गमलङ्कारः, प्रबन्धव्यापिनं भगवति कविगतभक्तिभावं प्रति इदमङ्गमित्यलङ्कारत्वम्, यदाह—'रसभावादितात्पर्यमाश्रित्य विनिवेशनम्। अलंकृतीनां सर्वासामलंकारत्वसाधनम्' इति। छायेत्यत्र 'छायायां होऽकान्तौ' इति कान्तिभिन्नार्थवाचित्वे यकारस्य हकारः, 'हरिद्राच्छाया' इति ङीप्च, 'अनुक्तमन्यशब्दानुशासनवत्' इत्यनेन 'यस्येति च' इत्यकारलोपश्च, 'विश्रमेर्णिव्वा' इति णिव्वादेशः ॥ १९॥

**सअलाअमाण णिट्ठा सअलसुराणं वि अंतरो अप्पाणो ।**
**सअलफलाण पसूई सअलजणाणं समो खु णअसच्च तुमं ॥२०॥**

छा ॥ सकलागमानां निष्ठा सकलसुराणामप्यन्तर आत्मा ।
सकलफलानां प्रसूतिः सकलजनानां समः खलु नतसत्य त्वम् ॥

व्या ॥ **सअल** इति ॥ भो नतसत्य त्वं सकलागमानां सर्वेषां शास्त्राणां निष्ठा निष्पत्तिः तात्पर्यसीमेत्यर्थः, यद्यपि तानितानि वाक्यानि तत्तत्पराणीवापाततः प्रतीयन्ते, विमर्शे तु केषाञ्चित् भवदाराधनस्वरूपनिरूपणपरत्वं केषांचित् साक्षादाराध्यभूतभवत्स्वरूपादिपरत्वमिति भवानेवामीषां विषयः, ननु इमान्येव विधिशिवादिवैभवप्रतिपादकानि कानिचिदवेक्ष्यन्ते, तत्राह—सअलेति। त्वं सकलानां सर्वेषां सुराणामपि यथा मनुष्यादीनां तथा तेषामपीत्यपेरभिप्रायः, अन्तर आत्मा, आत्मा हि देहान्तरवस्थितः धारयति देहम्, विनियुङ्क्ते च अभिमतकर्मसु, तथा त्वमपि देवादीनामन्तरात्मा सन् तांस्तानवस्थापयसि, नियमयसि च, तथा च श्रूयते—'स आत्मा अङ्गान्यन्या देवताः' 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति, इदमिन्द्रप्राणाधिकरणे स्फुटम्, 'एकमेवाद्वितीयं ब्रह्म' इत्यस्य सामञ्जस्याय नानादेवतानामाङ्कितानां कारणवाक्यानामैकध्याय च सर्वसिद्धान्तिभिरभिमतोऽयं न्यायः, निर्णयस्तु तत्रानन्यथासिद्धैरभिधानैरिति सर्वेषामपि नारायणपरत्वं निष्पाद्यम्, इदं च 'वेदैश्च सर्वैरहमेव वेद्यः' 'सर्वे वेदा यत्प-

दमामनन्ति ' ' सर्वे वेदा यत्रैकं भवन्ति ' इत्यादिना निर्व्यूढम्, न च तत्रापि इन्द्रादिष्विव स्वान्तर्यामिपरत्वं कुतो नेति चोद्यम्, निर्णयप्रकरणस्थस्य तस्य व्यामिश्रताकल्पनस्यान्याय्यत्वात्, कारणत्वान्तर्यामित्वयोः सापेक्षतया अन्योन्याश्रयप्रसक्तेः, नारायणपदस्य सकलकुमतिकलहकूलङ्कषत्वाच्चेत्यलम्; यत एवं ततः सकलफलानां फलसमुदायस्य प्रसूतिः प्रभवः तत्तद्देवतोपासकानामपि भगवतैवानुग्राह्यत्वात्, तच्च श्रीमत्यां गीतायां ' योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम् ' इति साक्षाद्भगवतैव नानादेवतानां स्वशरीरत्वं तदुपासकानामात्मनैव श्रद्धाभिवृद्धिं च प्रतिपाद्य ' लभते च ततः कामान् मयैव विहितान् हि तान्' इति स्वस्यैव फलप्रदत्वं प्रपञ्चितम्, चतुर्वर्गप्रदत्वं वा, तच्च ' सकलफलप्रदो हि विष्णुः' 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ' ' मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ आब्रह्मभवनाल्लोकाः पुनरावर्तिनोऽर्जुन ' इति, अतश्च त्वं सकलजनानां विषये समः एकरूपः, यथोक्तं भगवता- ' चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ । ...उदारास्सर्व एवैते ' इति, ' न मे द्वेष्योऽस्ति न प्रियः' इति च, नन्वयमनाश्रितान् दण्डयति भगवान्, कथयति च 'विनाशाय च दुष्कृताम्... संभवामि युगेयुगे ' इति, सत्यं, तत्रापि न तस्य द्वेषः प्रतिबन्धकापनोदेन शासनस्यात्यनुग्रहकार्यत्वात् । आत्मशब्दे 'वात्मभस्मनि पः' इति तमयोः पत्वे 'पुंस्याणो राजवच्चानः ' इत्याणः ॥ २० ॥

**इअ सव्वाण समाणो सच्चठिओ दाससच्च सइ परिपुण्णो ।**
**कह वहसि पक्खवाअं पण्डवपमुहेसु पेसणं वि सहन्तो ॥ २१ ॥**

छा ॥ इति सर्वेषां समानः सत्यस्थितो दाससत्य सदापरिपूर्णः ।
कथं वहसि पक्षपातं पाण्डवप्रमुखेषु प्रेषणमपि सहमानः ॥

व्या ॥ **इअ** इति॥ प्रागुक्तप्रक्रियया सर्वेषां समानः सदा परिपूर्णः अवाप्तसमस्तकामोऽपि त्वं पाण्डवप्रमुखेषु केषुचित् प्रेषणं दूत्यादिकर्मप्रवर्तनं स्वामित्वा-

ननुगुणमपि सहमानः पक्षपातं प्रणयं कथं केन प्रकारेण वहसि, अस्त्येवे सर्वसमस्यापि निरङ्कुशस्य तव नित्याभियुक्तेषु पाण्डवादिषु निरतिशयं वात्सल्यम्, येन स्वातन्त्र्यकाष्ठारूढं पारतन्त्र्यमप्यभिमन्यसे इत्याशयः, तदुक्तं भगवता 'तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्' 'ज्ञानी त्वात्मैव मे मतम्' 'वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः' 'मम प्राणा हि पाण्डवाः' 'यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु' इति। कथमित्यत्र 'लुक्मांसादौ' इति बिन्दुलोपः ॥ २१ ॥

अ ॥ त्वदाराधनरूपे कर्मपथे प्रवृत्तानां त्वमेव सहाय इत्याह—

**विसमम्मि कम्ममग्गे विपरिखलन्ताण विह्भलिअकरणाणं ।**
**णाह णिहिलाण अण्णो णत्थि तुमाहि णअसच्च हत्थालंबो॥२२॥**

छा ॥ विषमे कर्ममार्गे विपरिस्खलतां विह्वलितकरणानाम् ।
नाथ निखिलानामन्यो नास्ति त्वत्तो नतसत्य हस्तालम्बः ॥

व्या ॥ **विसमम्मि** इति ॥ नतसत्य नाथ इति द्वयं रक्षितृरक्षणैकान्त्यनिर्वाहकम्, विषमे दुर्निर्वहे निम्नोन्नते च कर्मणां मार्गे कल्प एव अध्वनि विपरिस्खलतां मुह्यतां गतिवैक्लव्यमाप्नुवतां च, विह्वलितानि अनायत्तीकृतानि श्रमेण दुरितेन च परवन्ति करणानि इन्द्रियाणि येषां तेषां निखिलानामशेषाणामपि चेतनानां त्वत् त्वत्तः अन्यः इतरः हस्तालम्बः हस्तयोरवलम्बः पतनाभावाय नास्ति, न केवलं कृतकृत्यानां फलप्रदो भवान्, अपि तु कर्मानुतिष्ठतामपि सहायः; अनेन प्रसादने प्रवृत्तानामज्ञानालस्याद्यपनोदेन साहायकमाचरतः ते कथं वर्ण्यतां करुणेति प्रतीयते। श्लेषानुप्राणितोऽत्र रूपकमलङ्कारः । स्खलतामित्यत्र 'कगटडतदपःकःपशोरुपर्यद्रे' इति सकारलोपः, विह्वलशब्दे 'वश्च विह्वले' इति स्तोर्वस्य भो वा, त्वत् इत्यत्र युष्मद्-ङसि इति स्थिते 'तुव तुम तुह तुब्भ' इति युष्मच्छब्दस्य तुमादेशे 'दिर्दोत्तो दु ङसौ' इति तुमस्य दीर्घे 'ङसिसो हि' इति हि आदेशे तुमाहि इति रूपम्, हस्तशब्दे 'स्तः' इति स्तोः थकारादेशः ॥

अ ॥ कर्माद्युपायानां भवन्तमन्तरेण फलदाने शक्तिविरहात् जीवानां भव-

नैरपेक्ष्येणोपायानुष्ठानेऽसामर्थ्याच्च सक्षादुपायत्वं भवत्येव स्वरसमिति प्रतिपादयति—

**णाणस्स को अविसओ अच्चुअ कलुणाए तुज्झ को दूरठिओ।**
**सत्तीअ को अइभरो ता खु उवाओ तुमं चिअ सअंसिद्धो॥**

छा॥ ज्ञानस्य कोऽविषयोऽच्युत करुणायास्तव को दूरस्थितः।
शक्तेः कोऽतिभरस्तस्मात्खलूपायस्त्वमेव स्वयंसिद्धः॥

व्या॥ **णाणस्स** इति॥ भोयच्युत तव ज्ञानस्य अविषयः कः, 'यस्सर्वज्ञः सर्ववित्' इति हि श्रूयते, करुणायाः दयायाः, दूरस्थितः अपात्रं कः, पापिनामपि पातकस्यैव प्रतिबन्धकत्वात् स्वरूपतः स्थिता तवापि कृपा कालं प्रतीक्षत इति न विरोधः, शक्तेः 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिना श्रुतायाः, अतिभरः दुरुद्धरः दुर्निर्वह इत्यर्थः, कः, सर्वत्र न कोऽपीत्याक्षिप्यते, तस्मात् त्वमेव स्वयंसिद्धः, इतरे तु साध्या इत्याशयः, उपायः अविशेषोक्तेः सर्वेषामेक एव त्वमुपाय इति च लभ्यते, त्वमेव नैतादृशश्चेतनोऽचेतनो वा अन्यः, इतरगुणापेक्षया ज्ञानशक्तिकरुणानामुपायत्वनिर्वाहकत्वं श्रीवत्साङ्कमिश्रैरपि 'त्वज्ज्ञानशक्तिकरुणासु सतीषु नेह पापं पराक्रमितुमर्हति मामकीनम्' इति सूचितम्; करुणापदे रेफस्य हरिद्रादित्वाल्लत्वम्, 'णइ चेअ चिअ व्व एवार्थे' इत्यवधारणे चिअ॥ २३॥

**संकप्पकण्णहारो किंकरसच्च भवसाअरे अइगहिरे।**
**अणहो तुमं खु पोओ अप्पाण किवासमीरणेण पवट्टो॥ २४॥**

छा॥ संकल्पकर्णधारः किंकरसत्य भवसागरेऽतिगभीरे।
अनघस्त्वं खलु पोत आत्मनां कृपासमीरणेन प्रवृत्तः॥

व्या॥ **संकप्प** इति॥ हे किंकरसत्य आत्मनां जीवानाम्, अतिगभीरे अतलस्पर्शे अदृष्टावसानेच, भवः संसार एव सागरः अपर्यन्तत्वदुस्तरत्वोर्मिलत्वादिभिः साधारणैर्धर्मैः, त्वं कृपया करुणयैव समीरणेन प्रवृत्तः अभिमुखीकृतः चलितश्च, संकल्पः जीवरक्षणप्रावण्यमेव कर्णधारः नाविको यस्य सः, अनघः

विप्रलम्भकत्वसापेक्षत्वादिदोषरहितः छिद्रादिशून्यश्च, पोतः नौः, असि खलु, 'विष्णुपोतं विना नान्यत्किञ्चिदस्ति परायणम्' इत्यादिना प्रथितम् । 'गभीरग इत्' इति ईकारस्य ह्रस्वः, 'प्रवृत्तसंदष्ट' इत्यादिना प्रवृत्तशब्दे स्तोष्ठत्वम्, 'ऋतोऽत्' इत्यत्वम्, 'इत् कृपणे' इति कृपाशब्दे ककारोपरि ऋकारस्य इकारः, प्रायोलुगपेक्षया श्रुतिसुखस्य प्रकृते उपलम्भात् 'पो वः' इति वत्वम् ॥ २४ ॥

अ ॥ अच्युतस्यैकस्यैव तादृशं परमपुरुषार्थस्थूललक्षत्वम्, नेतरेषामिति प्रपञ्चयति—

**अच्चुअ ण देन्ति मोक्खं ईसरभावेण भाविआ इअरसुरा ।**

**रत्तिं परिवट्टेउं लक्खं आलेक्खदिणअराण वि ण खमम् ॥२५॥**

छा ॥ अच्युत न ददति मोक्षमीश्वरभावेन भाविता इतरसुराः ।

रात्रिं परिवर्तयितुं लक्षमालेख्यदिनकराणामपि न क्षमम् ॥

व्या ॥ **अच्चुअ** इति ॥ इतरे त्वत्तोऽन्ये सुराः देवाः ईश्वरभावेन जगदीश्वरस्वभावेन, भाविताः श्रद्धाविलैरभिमता अपि, मोक्षं न ददति, बद्धवत एव मोचने प्रभुत्वात्, स्वतो बद्धस्य तादृशपुरुषान्तरमोचनेऽनधिकृतत्वाच्च; इदं प्रतिबिम्बोपन्यासेन साधयति—रात्रिं दिनकरैकापनेयां, परिवर्तयितुं विपर्यसितुम्, आलेख्यदिनकराणां चित्रलिखितानां दिनकराणां सूर्यतयाभिमतानां, लक्षमपि, किं पुनरेकम्, न क्षमं न शक्तम्; 'क्षमं शक्ते हिते त्रिषु' इति कोशः; एकेन साक्षान्निर्वर्तनीयोऽर्थो यथा बहुभिरपि तत्प्रतिच्छन्दकैर्न साध्यते, तथा भगवतैकेन प्रसाधनीयः परमपुरुषार्थः समस्तैरपि दैवतैर्न दातुं पार्यत इति दृष्टान्तोऽलंकारः । 'वा लङ्लोट्‌छतृषु' इति अत एत्वे देंति इति रूपम्, वर्तयितुमित्यत्र 'तस्याधूर्तादौ टः' इति टः, 'णिजदेदावावे' इति णिच एत्वम् ॥२५॥

**अमअरसस्साअरस्स व अहिन्दवुरणाह णिम्मलमहग्घाइं ।**

**तीरन्ति ण विगणेउं अणण्णसुलहाइ तुज्झ गुणरअणाइं ॥ २६ ॥**

छा ॥ अमृतरससागरस्येवाहीन्द्रपुरनाथ निर्मलमहार्घाणि ।

तीर्यन्ते न विगणयितुमनन्यसुलभानि तव गुणरत्नानि ॥

व्या ॥ **अमअ** इति ॥ अहीन्द्रपुरनाथ अमृतरससागरस्य अमृते मोक्षे यो रसः अनुरागः स एव रसः अमृतद्रवः, तस्य सागरस्येव स्थितस्य, तव त्वदीयानि निर्मलानि दोषासंस्पृष्टानि अमलिनानि च, महान् अर्घः मूल्यं पूजा च येषां तानि, अन्येषु त्वदितरेषु असुलभानि गुणाः गुण्यमानाः गाम्भीर्यमार्दवदया-धृतिदक्षताद्याः एव रत्नानि, औज्ज्वल्यहेतुतया रत्नव्यपदेशार्हत्वम् , विगणयितुं संख्यातुम् , अनन्तत्वात् , तिरस्कर्तुं वा तामसप्रकृतिभिरपीति भावः, न तीर्यन्ते न लङ्घ्यन्ते अनाश्रितैस्तामसैरप्यपलपितुमशक्यत्वं गुणानां प्रकृतिः, सुहृदां स्तुतिरन्यथा सिद्धा, द्विषतां स्तुतिस्तु गुणातिशयापादितैव भवति, यथा श्रीमति रामायणे 'तरुणौ रूपसंपन्नौ सुकुमारौ' 'त्वमप्रमेयश्च दुरासदश्च' 'शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः' इत्यादिषु ; इमानि हि विप्रकृतानां द्विषतां शूर्पणखातारारावणानां वचनानि। 'त्वीर हृ कृ तृञाम्' इति तरतेः कर्मणि ईरादेशः,रत्नशब्दे 'क्ष्मारत्नेऽन्त्यहलः' इत्यन्त्यहलः प्रागत्वम्, नपुंसकाकारान्तबहुवचने 'श्चि शिं शिङ् जश्शसोः' इति शिं इति सानुस्वारः शिदिकारः, निरनुस्वारोऽनुनासिकश्च भवति ; रूपकानुविद्धेयमुपमा ॥ २६ ॥

**भूसिअसुइसीमंतो भुअइंदउरेस सव्वगुणसीमंतो ।**

**खविअतिसामलमोहो मुणीण हिअएसु फुरसि सामलमोहो ॥**

छा ॥ भूषितश्रुतिसीमन्तो भुजगेन्द्रपुरेश सर्वगुणसीमान्तः ।

क्षपिततृषामलमोहो मुनीनां हृदयेषु स्फुरसि श्यामलमयूखः ॥

व्या ॥ **भूसिअ** इति ॥ भुजगेन्द्रपुरेश मुनीनां मननशीलानां हृदयेषु भूषिताः प्रतिपाद्यतया अवस्थानेन परिष्कृताः श्रुतीनां सीमन्ता उपनिषदः येन तथोक्तः, सर्वाः याः गुणानां दयादिधर्माणां सीमाः काष्ठाः तासाम् अन्तः अवसानभूमिः, गुणैर्निरतिशयबृहत्त्वमनेनोक्तम् , क्षपिततृषामलमोहः अपहततृष्णादोषाज्ञानः

श्यामलाः मयूखाः किरणाः यस्य तादृशः, स्फुरसि प्रकाशसे, एवं ध्यायस इति भावः। भुजगेन्द्रेत्यत्र 'प्रायो लुक्' इत्यादिना जकारककारयोर्लोपे भुअअ इति स्थिते इन्द्रशब्दे परे 'लोपः' इत्यचि परे बहुलमचो लोपे रेफलोपे च भुअइन्द इति रूपम्, मयूखशब्दे 'तु मयूरचतुर्थचतुर्द्वारचतुर्दशचतुर्गुणमयूखोलूखलसुकुमारोदूखललवणकुतूहले' इत्यादेरचः परेण सस्वरव्यञ्जनेन सह ओत्वं नित्यम्; अत्र पूर्वार्धे सीमन्तो इति, उत्तरार्धे सामलमोहो इति च स्वराणां व्यञ्जनानां च पादान्ते व्यवधानेन आवृत्तेर्दर्शनाद्यमकभेदः शब्दालंकारः; 'अव्यपेतव्यपेतात्मा याऽऽवृत्तिर्वर्णसंहतेः। यमकं तच्च पादानामादिमध्यान्तगोचरम्' इति लक्षणात्; इतो गाथात्रयेऽप्ययमलंकारः; सीमन्तसीमान्तशब्दयोः प्राकृते 'संयोगे' इति युक्तात्प्राक् ह्रस्वविधानात् न रूपभेदः॥ २७॥

**सुहलक्खणसिरिवच्छो सोहसि णिम्मुत्तविरहखणसिरिवच्छो।**
**रणदेवणसविहगओ उद्धणगलुलणइतीरवणसविहगओ॥ २८॥**

छा॥ शुभलक्षणश्रीवत्सः शोभसे निर्मुक्तविरहक्षणश्रीवत्सः।
रणदेवनसविभगत उद्भटगरुडनदीतीरवनसविधगजः॥

व्या॥ **सुह** इति॥ त्वं शुभानि लक्षणानि यस्य तादृशः श्रीवत्सः तन्नाम कोऽङ्कविशेषो यस्य सः, निर्मुक्तः विरहस्य वियोगस्य क्षणः कालविशेषः यया तादृशी विरहासहा श्रीः यस्य तत् वत्सम् उरस्स्थलं यस्य सः, 'उरो वत्सं च वक्षश्च' इत्यमरः; रणः समर एव देवनं क्रीडनं वीराणां विनोदरूपत्वात्, तस्मिन् विभया प्रभया उत्साहकृतया सह वर्तन्ते, ते रणदेवनसविभाः, तान् गतः प्राप्तः तेषां प्रशस्तत्वात्, 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इति श्रीगीतावचनात्; उद्धतः निरङ्कुशत्वादुद्दामः गरुडनदीतीरस्थितस्य वनस्य सविधे समीपे वर्तमानो गजश्च शोभसे अति सर्वान् प्रकाशसे; पूर्वोक्त एव शब्दालंकारः; काव्यलिङ्गरूपकयोस्संसृष्टिः। लक्षणक्षणशब्दयोः 'क्षः' इति क्षस्य नित्यं खादेशः; श्रीवत्सपदे त्सस्य 'थ्यश्चत्सप्सामनिश्चले' इति च्छादेशः, 'उद्धते उम्मुहउद्धणपहट्टाः' इति गहिआदित्वादुद्धणेति निपातः॥ २८॥

**अकुमारजोव्वणठिअं अहिंदउरणाह अहिमअं अणुरूवम् ।**
**णिच्चं सहावसिद्धं सुव्वइ सूरिमहिअं सुहं तुह रूवम् ॥ २९ ॥**

छा ॥ अकुमारयौवनस्थितमहीन्द्रपुरनाथाभिमतमनुरूपम् ।
नित्यं स्वभावसिद्धं श्रूयते सूरिमहितं सुखं तव रूपम् ॥

व्या ॥ **अकुमार** इति ॥ अहीन्द्रपुरनाथ तव रूपम् कुमारं कौमारदशासहितं तथा यौवने युवत्वे स्थितं स्थास्नु स्थिरयौवनमित्यर्थः, तथा न भवतीति तादृशं, कौमारावस्थायुवत्वसन्धौ विद्यमानमिति भावः; अभिमतम् इच्छामात्रगृहीतं कर्माद्युपाधिनिवृत्तये इदम्, अनुरूपं भवन्महिमानुगुणं नित्यम् अविनाशि सततैकरूपं वा, स्वभावसिद्धम् अपरयत्ननिर्वर्त्यं सूरिभिः विद्वद्भिः अनन्तगरुडादिनित्यसूरिभिर्वा, महितं पूजितं तेषां सततोपभोगेऽपि तृष्णावर्धकमिति भावः, सुखमनुकूलबुद्धिविषयतया शिशुपालादीनां द्विषामपि भोग्यं, श्रूयते आम्नायते, 'युवा कुमारः' 'इच्छागृहीताभिमतोरुदेहः' 'आप्रणखात्सर्व एव सुवर्णः' इत्यादिषु स्फुटमिदम्, सुखत्वानुरूपत्वादिभिः लावण्यौज्ज्वल्यसौकुमार्यादिभिः भगवत इव दयादिगुणैरनितरसदृशत्वमावेद्यते । यौवनशब्दे 'ऐच एङ्' इत्योकारः ॥ २९ ॥

**तिउणं तस्स विआरा अच्चुअ पुरिसोत्ति आअमगणिज्जन्ता ।**
**अत्था इह खु समत्ता परम्मि रूवम्मि भूसणत्थसरूवा ॥ ३० ॥**

छा ॥ त्रिगुणं तस्य विकारा अच्युत पुरुष इत्यागमगण्यमानाः ।
अर्थास्तव खलु समस्ताः परस्मिन् रूपे भूषणास्त्रस्वरूपाः ॥

व्या ॥ **तिउणं** इति ॥ अच्युत त्रयाणां गुणानां समाहारः त्रिगुणं प्रकृतिः, तस्य त्रिगुणस्य विकाराः महदहंकारतन्मात्रादिरूपाः, पुरुषः पञ्चविंशो जीवः इति एवंप्रकारेण, आगमैः शास्त्रैः, गण्यमानाः 'भूतानि च कवर्गेण' इत्यारभ्य संख्यायमानाः पदार्थाः प्रमेयाः समस्ताः सर्वेऽपि परस्मिन् स्वासाधारणतया भवत्संकल्पसिद्धे रूपे भूषणानाम् अस्त्राणां च स्वरूपं येषां ते भूषणास्त्रस्थानापन्नाः । 'शोर्ड्कु खोस्तम्भमस्तानिस्स्पृहपरस्परश्मशानश्मश्रुणि' इति समस्तशब्दे सलोपः ॥ ३० ॥

**णिंति तुमाओ अच्चुअ णिक्खविअविवक्खनिट्ठुरपरक्कमणा ।**
**संठविअपरमधम्मा साहुपरित्ताणसप्फला ओआरा ॥ ३१ ॥**

छा ॥ निर्यान्ति त्वत्तोऽच्युत निक्षपितविपक्षनिष्ठुरपराक्रमणाः ।
संस्थापितपरमधर्माः साधुपरित्राणसत्फला अवताराः ॥

व्या ॥ **णिंनि** इति ॥ अच्युत निक्षपितानि अपहस्तितानि विपक्षाणां द्विषतां निष्ठुराणि तीव्राणि भागवतभीषणानि पराक्रमणानि विक्रमाः यैस्ते, संस्थापितः दृढीकृतः प्रचारितो वा परमः धर्मान्तरेभ्यो मौलिभूतः धर्मः भगवदैकान्त्यरूपः यैस्ते, अत एव साधूनां सतां परित्राणं तामसप्रकृतिभ्यो रक्षणमेव सत् फलं प्रयोजनं येषां ते, अवताराः तवेति गम्यते, त्वत्तः त्वत् परवासुदेवभूतात्, निर्यान्ति भवत्सङ्कल्पात्सम्भवन्ति, यद्यपि क्षीराम्बुधिशयनात् व्यूहमूर्तेरेव रामकृष्णाद्यवतारा भागवतादिभ्यः पुराणेभ्योऽवगम्यन्ते, अथापि तस्यापि मूलभूतः परवासुदेव एव सर्वकारणमित्यविरोधः । संस्थापितशब्दस्य उत्खातादित्वाद्विकल्पेन ह्रस्वः; 'त्वोदवापोताः' इति अवेत्यस्य ओकारः ॥ ३१ ॥

**हरिमणिसरिच्छणिअरुइहरिआअंतभुअइंदउरपेरंतो ।**
**काले दासजणाणं कण्ह घणो होसि दिण्णकालुण्णरसो ॥३२ ॥**

छा ॥ हरिमणिसदृक्षनिजरुचिहरितायमानभुजगेन्द्रपुरपर्यन्तः ।
काले दासजनानां कृष्ण घनो भवसि दत्तकारुण्यरसः ॥

व्या ॥ **हरि** इति ॥ कृष्ण हरिमणिः इन्द्रनीलः तेन सदृक्षा सदृशी या निजरुचिः स्वदेहच्छाया, तया हरितायमानः श्यामीभवन् भुजगेन्द्रपुरपर्यन्तः अहीन्द्रनगरोपशल्यं यस्य सः, श्यामहरितयोरैक्यस्य कविसमयसिद्धेरिदम्, दासजनानां, काले 'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते' इत्युक्तकृपोद्बोधोपलक्षिते समये प्रावृषीति च, दत्तः कारुण्यं करुणैव रसः जलम् येन सः, घनः मेघः भवसि, मेघसाम्यं च तापापनोदनेन वहसि, कृष्णघन इत्येकं वा पदम्, तदा वर्णवाचकः कृष्णशब्दः । अत्र सदृक्षशब्दे स्पृहादौ पाठात् क्षस्य छत्वे 'दृश्यक्सक्किनि' इति ऋकारस्य रि इत्या-

देशः, पर्यन्तशब्दस्य 'वा पर्यन्ते' इति विभाषा एरः, 'कृष्णे वर्णे' इत्यस्य पाक्षिकत्वात् अत्र 'श्नष्ण' इत्यादिना ण्हादेशे 'ऋतोऽत्' इति ऋकारस्याकारः, दत्तशब्दस्य स्वप्नादिपाठात् इत्वे 'पञ्चदशदत्तपञ्चाशति णः' इति णादेशः ॥

**गलुलणइकच्छरण्णे लक्खिज्जसि लच्छिमहिकणेरुमणहरो ।**
**दीसंतबहुलदाणो दिसागइंदो व खुडिअदणुइंददुमो ॥ ३३**

छा॥ गरुडनदीकच्छारण्ये लक्ष्यसे लक्ष्मीमहीकरेणुमनोहरः ।
दृश्यमानबहुलदानो दिशागजेन्द्र इव खण्डितदनुजेन्द्रद्रुमः ॥

व्या ॥ **गलुलणइ** इति॥गरुडनद्याः कच्छेषु जलप्रायप्रदेशेषु,यदरण्यं, तस्मिन् त्वं लक्ष्मीमह्याविव ये करेणू वशे, तयोः मनोहरः, ताभ्यां करणभूताभ्यां सदृशसमागमशोभयेतरेषां वा हृद्यः, तथा, दृश्यमानानि भक्तैरनुभूयमानानि साक्षात्क्रियमाणञ्च, बहुलानि अपेक्षितादधिकानि, अधिकञ्च, दानानि त्यागाः, त्यज्यमानविषयभेदात् समयभेदाद्वा बहुत्वम् , दानं मदाम्बु च यस्य सः, खण्डिताः पराजिताः भग्नाश्च, दनुजेन्द्राः एव द्रुमाः येन तादृशश्च सन् , दिशागजेन्द्रः इव निरुक्तसाधारणधर्मैः दिग्दन्तीव, लक्ष्यसे साक्षात्क्रियसे, रूपकश्लेषानुप्राणितेयमुपमा । अरण्यशब्दाकारस्य ' लोपोऽरण्ये ' इति पाक्षिकः लोपः; 'वाराणसी करेण्वां रणोः ' इति करिणीवाचके करेणुशब्दे रणोर्व्यत्ययः ; मनोहरशब्दे 'त्वत्सरोरुहमनोहरप्रकोष्ठातोद्यान्योन्ये वश्च क्तोः' इत्यकारः; 'दीसल्दृशेः' इति भावे कर्मणि च दृशेः दीसादेशे शता; खण्डितशब्दे 'चण्डखण्डिते णा वा' इति णकारेण सह पक्षिकम् आदेः अवर्णस्य उत्वम् ॥ ३३ ॥

अव॥ इत आरभ्य आपञ्चचत्वारिंशगाथं भगवतः त्रिलोकैकमङ्गलायतनदिव्यविग्रहशोभां निर्विशन् प्रथमतः चिकुरभारमनया विशिनष्टि—

**मुहचन्दमोलिदिणअरमज्झठिओ तुज्झ चिहुरभारन्धारो ।**
**अघडिअघडणासत्तिं सच्चं ठावेइ दाससच्च समग्गम् ॥ ३४**

छा ॥ मुखचन्द्रमौलिदिनकरमध्यस्थितस्तव चिकुरभारान्धकारः ।
अघटितघटनाशक्तिं सत्यां स्थापयति दासस्य समग्राम् ॥

व्या ॥ **मुहचन्द** इति ॥ दाससत्य तव मुखमेव चन्द्रः, मौलिः किरीटमेव दिनकरः, केशपाश एव अन्धकारः, नीलत्वादेवम्, तमोपहयोश्चन्द्रसूर्ययोर्मध्ये तन्निवर्त्यस्य स्वस्य आत्मलाभेन तव समग्रां परिपूर्णाम् अघटितानां प्रकृत्या असंभावितानां घटनायां योजनायां शक्तिं सामर्थ्यं स्थापयति सत्यापयति, कथमितरथा विरुद्धयोस्तेजस्तिमिरयोरेकस्मिन्वस्तुनि समावेश इत्यर्थापत्त्या भवतः सर्वातिशायिनीमघटितघटनाशक्तिं स्थिरीकरोति। 'निकषस्फटिकचिकुरे हः' इति चिकुरशब्दे कस्य हः,'धात्रीद्रेरस्तु' इति चन्द्रशब्दे द्रस्य रलोपः, अन्धकारपदे 'प्रायोलुक्' इत्यादिना ककारलोपे 'सन्धिरस्त्वपदे' इति सन्धौ 'अन्धारो' इति रूपम् ॥३४॥

**परिहसिअपुण्णअन्दं पउमसरिच्छप्पसण्णलोअणजुअलम् ।**
**संकप्पिअदुरिआइ वि सम्हरिअं हरइ दाससच्च तुह मुहम् ॥३५**

छा ॥ परिहसितपूर्णचन्द्रं पद्मसदृक्षप्रसन्नलोचनयुगलम् ।
सङ्कल्पितदुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम् ॥

व्या॥**परिहसिअ** इति॥दाससत्य परिहसितः सौन्दर्याह्लादकत्वादिगुणैरधरीकृतः पूर्णः कलासमग्रः चन्द्रः येन तत् पद्मसमानं प्रसादशालि च लोचनयोः युगलं यस्य तत् तव मुखं संकल्पितानि आरम्भाय निश्चितान्यपि दुरितानि पुंसां कलुषाणि संस्मृतं ध्यातं सत् एव हरति,भवद्वदनसौन्दर्यविवशतया दृढसंकल्पितान्यपि दुरितानि परित्यजन्तीति भावः, संकल्पितानि फलदानाय आरब्धान्यपि दुरितानि स्मृतमात्रं भवन्मुखं हरतीति वा । पद्मशब्दे 'वा छद्मपद्ममूर्खद्वारे' इति स्तोरन्त्यहलः प्रागुत्वम् , स्मृधातौ स्मकारस्य 'श्मष्मस्मह्मामस्मररश्मौम्हः' इति म्हादेशे 'अर उः' इति ऋदन्तधातोररे च म्हर इति रूपम् ॥ ३५ ॥

**माहप्पं तुह महिअं मंगलिअं तुलसिकोत्थुहप्पमुहाणं ।**
**अच्चुअ ठिरवणमालं वच्छं दावेइ लच्छिलक्खणसुहअं ॥ ३६ ॥**

छा ॥ महात्म्यं तव महितं माङ्गलिकं तुलसीकौस्तुभप्रमुखाणाम् ।
अच्युत स्थिरवनमालं वत्सं दापयति लक्ष्मीलक्षणसुभगम् ॥

व्या ॥ **माहप्पं** इति ॥ अच्युत स्थिरा सततानुभवेऽप्यम्लाना वनमाला वै-

जयन्ती यस्य तत्, लक्ष्मीलक्षणाभ्यां श्रीश्रीवत्साभ्यां सुभगं सुन्दरं, तव वत्सम् उरस्स्थलं, तुलसीकौस्तुभप्रमुखानां तुलसीहारकौस्तुभादीणां भूषणानां, महितम् अनितरसाधारणतया प्रशस्तं, माङ्गलिकं भद्रायतनं च, माहात्म्यं वैभवं कर्म, दापयति विश्राणयति; तुलस्यादीनामपि महिमा भगवद्वक्षस्सम्बन्धायत्तो न स्वतः इति आभरणस्याप्याभरणत्वं भगवन्मङ्गलविग्रहस्योक्तम्। ऐच एङिं स्तस्य थ-त्वे द्वित्वे वर्ग्यस्य युजः पूर्वस्योपरिस्थितौ भस्य हत्वे च कौस्तुभस्य कोत्थुह इति रूपम् ॥ ३६ ॥

**णिव्विसइ णिच्चतावो देवअणो देवणाअअ विहिप्पमुहो ।**
**सीअलसंतवहुत्तं छाहिं तुह विउलबाहुकप्पदुमाणम् ॥ ३७ ॥**

छा ॥ निर्विशति नित्यतापो देवजनो देवनायक विधिप्रमुखः ।
शीतलशान्तप्रभूतां छायां तव विपुलबाहुकल्पद्रुमाणाम् ॥

व्या ॥ **णिव्विसइ** इति ॥ देवनायक देवानां नाथ नित्यः तापः संसारतापः कर्मवश्यत्वकृतः यस्य सः, विधिप्रमुखः पितामहप्रभृतिः, देवानां जनो गणो वा, शीतलां शिशिरां भवतापापहां शान्ताम् अनुद्वेजकतया प्रसन्नां प्रभूतां पर्याप्तां, तव भवदीयानां, विपुलानां स्फीतानां बाहूनामेव कल्पद्रुमाणां सर्वापेक्षितस्थूलल-क्षाणां, छायाम्, निर्विशति सेवते ; 'बाहुच्छायामवष्टब्धो यस्य लोको महात्मनः' इत्यादिकमत्र भाव्यम् ; श्लेषमूलाभेदाध्यवसायानुविद्धं रूपकमलङ्कारः ; विपुले-ति विशेषणस्य सर्वाश्रयणीयतासमर्थकत्वात्पदार्थहेतुकं काव्यलिङ्गं चेति संसृष्टिः ; ब्रह्मादिनिलिम्परूपविपुलाधेयापेक्षया भगवद्बाहुकल्पद्रुमच्छायारूपाश्रयस्य वैपु-ल्याक्षेपादधिकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः ॥ ३७ ॥

**संकप्पअंदखोहिअतिउणोअहिविउलबुब्बुअप्पअरेहिम् ।**
**बह्मंडेहि वि भरिअं किंकरसच्च तुह कीस णु किसं उअरम् ॥ ३८**

छा ॥ सङ्कल्पचन्द्रक्षोभितत्रिगुणोदधिविपुलबुद्बुदप्रकरैः ।
ब्रह्माण्डैरपि भरितं किङ्करसत्य तव कस्मान्नु कृशमुदरम् ॥

व्या ॥ **संकप्प** इति ॥ किङ्करसत्य सङ्कल्पः भवत इति प्रकरणात् , 'बहु स्यां प्रजायेय' इत्याकारकमीक्षणं, स एव चन्द्रः क्षोभहेतुत्वादेवं रूपणम्, तेन क्षोभितः तरलीकृतः सम्प्रापितविकार इति प्रकृते, त्रिगुणं प्रकृतिः, तदेव उदधिः,दुर्लङ्घत्वात् भीषणत्वादपर्यन्तत्वादिभिश्च, तस्य बुद्बुदप्रकरैः बुद्बुदगणस्थानीयैः,क्षोभितात् सलिलात् वाताभिघातात् पयसि स्थासकाकाराः केचिदवयवा निस्सरन्ति, क्रमेण च विलीयन्ते, तद्वदीश्वरसङ्कल्पविशेषात् प्रकृतेः स्वभावान्यथाभाव उत्पद्यत इति भावः, तैः ब्रह्माण्डैः ब्रह्मणो धातुः कोशैः, असङ्ख्यैरिति बहुवचनाभिप्रायः, भरितं सञ्जातभरम् आक्रान्तमपि, तव उदरं जठरं कस्मान्नु केन हेतुना, कृशम् , निगीर्णानन्तब्रह्माण्डस्यापि तवोदरं कृशमेव लक्ष्यत इति चित्तमिदमिति भावः ; 'अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' इत्यादिकमत्रोपबृंहितम् । किंशब्दे पञ्चम्येकवचने 'किमो डीस डिणो' इति डिति ईसादेशे कीस इति रूपम् ॥ ३८ ॥

**णाहिरुहं तुह णलिणं भुअईसरणअरणाह सोहइ सुहअम् ।**
**मज्झठिअबम्हभमरं वच्छासणलच्छिपाअवीढसरिच्छम् ॥३९॥**

छा ॥ नाभिरुहं तव कमलं भुजगेश्वरनगरनाथ शोभते सुभगम् ।
मध्यस्थितब्रह्मभ्रमरं वत्सासनलक्ष्मीपादपीठसदृक्षम् ॥

व्या ॥ **णाहि** इति ॥ भुजगेश्वरनगरनाथ अहीन्द्रपुराधिप तव नाभिरुहं नाभिप्रभवं, मध्ये कर्णिकायां स्थितः ब्रह्मैव भ्रमरः यस्य तत् , सुभगं सुन्दरं, कमलं, वत्सः श्रीवत्स एव आसनं यस्यास्तस्याः लक्ष्म्याः पादपीठेन पादार्पणोपयोगिना पीठेन सदृक्षं सदृशं सत् , शोभते । पादपीठेत्यत्र 'लुक् पादपीठपादपतनदुर्गादेव्युदुम्बरे चान्तर्दः' इति दलोपे प्राप्तेऽपि 'सिरायां वा' इत्यतो ' वा ' इत्यधिकारान्नलोपः ॥ ३९ ॥

**दिढपीडिअमहुकइढवसोणिअपडलपरिपाडलंबरघडिआ ।**
**राअइ अच्चुअ मुहला रइणाहगइन्दसिंखला तुह रसणा ॥४०॥**

छा ॥ दृढपीडितमधुकैटभशोणितपटलपरिपाटलाम्बरघटिता ।

राजत्यच्युत मुखरा रतिनाथगजेन्द्रशृङ्खला तव रशना ॥

व्या ॥ **दिढपीडिअ** इति॥अच्युत दृढं बलवत् पीडितयोः मधुकैटभयोः असुरविशेषयोः शोणितपटलेन रुधिरौघेण परिपाटलम् आपाटलं यदम्बरं वसनं तस्मिन् घटिता बद्धा मुखरा शब्दायमाना तव रशना शृङ्खलं,रतिनाथस्य मदनस्यैव गजेन्द्रस्य शृङ्खला बन्धननिगलः, राजति शोभते;सौन्दर्यातिशयप्रयुक्तया कामिनीहृदयहारितयैवमुत्प्रेक्षा, वीरशृङ्गारयोर्युगपदालम्बनमसीति व्यज्यते; 'सुखसुप्तः परन्तपः' इतिवदुपपत्तिः। दैत्यादेराकृतिगणत्वेन कैटभपदस्यापि ग्रहणात् अइः; नच 'ऐच एङ्' इति एङेव युज्यत इति वाच्यम्, एवमपि प्रयोगदर्शनात्, 'दैत्यादिष्वइः' इति कात्यायनसूत्रवृत्तौ वररुचिना 'दैत्यं स्वैरं चैत्यं कैटभवैदेहकौ च वैशाखः । बैशिकभैरववैशम्पायनवैदेशिकाश्च दैत्यादिः'इति दैत्यादिगणे घटनात्; तत्रैव टस्य 'ढः कैटभशकटसटे' इति ढः; भस्य 'वो भस्य कैटभे' इति वश्च; मुखरशब्दे रस्य हरिद्रादित्वाल्लः। इयं कथा श्रीमहाभारतीयसभापर्वणि दृश्यते ॥ ४० ॥

**दासाण सच्च दीसइ दाणववीराण दीहणिद्दासअणं ।**

**तुह उअरट्ठिअतिहुवणपासाअक्खंभसच्छअं ऊरुजुअम् ॥ ४१ ॥**

छा ॥ दासानां सत्य दृश्यते दानववीरयोर्दीर्घनिद्राशयनम् ।

तवोदरस्थितत्रिभुवनप्रासादस्तम्भसच्छायमूरुयुगम् ॥

व्या ॥ **दासाण** इति ॥ दासानां सत्य तव ऊरुयुगं, दानववीरयोः मधुकैटभयोः संबन्धिन्याः दीर्घनिद्रायाः अपुनःप्रबोधाया निद्रायाः शयनं पर्यङ्कभूतं तव उदरे स्थितं यत् त्रिभुवनं त्रैलोक्यं तदेव प्रासादः, तस्यप्रासादो वा, तस्य स्तम्भसच्छायं स्तम्भस्थानापन्नं दृश्यते। सच्छायमित्यत्र 'दिह्वौ मिथस्से' इति बाहुलको ह्रस्वः ; स्तम्भशब्दे 'स्तम्भे' इति स्तस्य खादेशः ॥ ४१ ॥

**जाणुमणिदप्पणेण अ जंघामरगअकलाइआइ अ धणिआ ।**

**अच्चुअ णमुअइ कंती लच्छीव सरोअलञ्छणे तुह चलणे ॥**

छा ॥ जानुमणिदर्पणेनच जङ्घामरकतकलाचिकयाच धन्या ।

अच्युत न मुञ्चति कान्तिर्लक्ष्मीरिव सरोजलाञ्छनौ तव चरणौ ॥

व्या ॥ **जाणु** इति ॥ अच्युत जानुनैव मणिदर्पणेन, जङ्घयैव मरकतकला चिकया च, धन्या धनवती प्रकाशमानेति यावत्, कान्तिः लक्ष्मीरिव सरोजलाञ्छनौ सरसिजरेखाङ्कितौ, सरोजसदृशौ वा, तव चरणौ, न मुञ्चति न त्यजति; दर्पणकलाचिकादिभोगोपकरणवती लक्ष्मीर्हि सरोजं न जात्वपि जहाति। मरकतशब्दे 'खोः कन्दुकमरकतमदकले' इति कस्य गः ॥ ४२ ॥

**सुइसीमंतपसूणं सोहइ णअसच्च तुज्झ सव्वसरण्णम् ।**

**कमणक्खणजणिअसुरणइपसमिअतेल्लोक्कपाअअं पअपउमम्॥४५॥**

छा ॥ श्रुतिसीमन्तप्रसून शोभते नतसत्य तव सर्वशरण्यम् ।

क्रमणक्षणजनितसुरनदीप्रशमितत्रैलोक्यपातकं पदपद्मम् ॥

व्या ॥ **सुइ** इति ॥ नतसत्य तव पदपद्मं पद्मसदृशं पदं, श्रुतिसीमन्तेपु श्रुतीनामेव वनितानां सीमन्तस्थानीयेषु उपनिषद्भागेषु प्रतिपाद्यतया वर्तनात् प्रसूनं कुसुमं, सर्वेषामपि शरण्यं रक्षणक्षमं, क्रमणस्य आक्रमणस्य क्षणे त्रैविक्रमप्रक्रमे जनितया सुरनद्या मन्दाकिन्या प्रशमितं त्रैलोक्यस्य पातकं येन तच्च, शोभते;वेदान्तवेद्यत्वं, सर्वापाश्रयत्वं, सर्वदुरितनिवर्तकत्वम् , अन्यपरेष्वपि व्यापारेपु सर्वप्रतिबन्धकनिवर्तनैकतानत्वं च भगवत्पदाम्बुजस्य प्रतिपादितम् । त्रैलोक्यपदस्य प्रमुक्तादिपाठात् द्वित्वम् , 'प्रमुक्तगे' इति सूत्रात् ॥ ४३ ॥

**इअ तिहुवणेक्कमूलं आसाएंति अणहा अमअसाउरसम् ।**

**ओसहिमाहिहरपासे उइअं तुं ओसहं व दासरुआणम् ॥ ४४ ॥**

छा ॥ इति त्रिभुवनैकमूलमास्वादयन्त्यनघा अमृतस्वादुरसम् ।

ओषधिमहीधरपार्श्वे उदितं त्वामौपधमिव दासरुजाम् ॥ ४४ ॥

व्या।। इअ इति।।इति वर्णितप्रकारेण, ओषधिमहीधरस्य औषधाचलस्य,पार्श्वे अन्तिके,उदितं स्वेच्छया आविर्भूतं,त्रिभुवनस्य एकमूलम् एकाधारं, त्रिभुवनमेव एकं मूलं यस्य तच्च, अमृतं ज्ञानसङ्कोचराहित्योपलक्षितो मोक्ष एव स्वादुः अनुकूलबुद्धिविषयभूतः रसः आस्वादः यस्य तत्, दासरुजां दाससम्बन्धिनां व्याधीनाम्, औषधमिव, त्वाम्, अनघाः अज्ञानसंशयहेतुभूतपापरहिताः, आस्वादयन्ति सेवन्ते; 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः।नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते'इत्यादिना पापक्षयस्य भगवदद्वेषाभिमुख्यादिहेतुत्वाभिधानात् प्रतिबन्धकराहित्यस्य कार्यसामान्यं प्रत्यपेक्षितत्वाच्च सर्वाश्रयणीयतया सुलभस्यापि भगवतो महाविश्वासशालिसाधुजनमात्रसमाश्रयणीयत्वमुपपन्नम् ; औषधस्यापि कर्मक्षय एव सुलभत्वात्तुल्यमिदम् ;दासरुजामौषधमिव त्वामित्यनेन भूयसीनामपि रुजानां भगवानेक एवौषधमित्यर्थलाभात्प्रसिद्धौषधव्यतिरेक आक्षिप्यते; वाचनिकस्तूपमालङ्कारः । एकशब्दस्य दैवादित्वात् कद्वित्वम् एदैतोः क्वचित्स्वरूपेणैव ह्रस्वः; आङ्पूर्वात्स्वादयतेर्वलोपे 'णिजदेदावावे'इति एकारादेशे लट्प्रथमपुरुषबहुवचने न्तिइत्यादेशेच आसाएन्ति इति रूपम्, पार्श्वशब्दरेफस्य 'खलामधश्च' इति लोपः;युष्मच्छब्दे अमि 'अमा तुसे तुए च' इति चकारात् 'युष्मत्सुना तुवं तुं तुमं तुह' इत्यादेशेषु तुमिति प्रकृते रूपम् ।। ४४ ।।

**सिद्धंजणं व सामं तुज्झ तणुं णिअविलोअणेसु णिहिंता ।**
**अच्चुअ लच्छिणिवासं निच्चणिऊढं णिहिं व पेच्छंति तुमं ॥**

छा ।। सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनयोर्निदधतः ।
अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम् ।।

व्या ।। **सिद्धंजणं** इति ।। अच्युत सिद्धानां रसवादादिषु सिद्धिमतां यदञ्जनं निधिदर्शनोपयोगि, तद्वत् श्यामां नीलां, तव तनुं भवद्विग्रहं, निजविलोचनयोः निदधतः साक्षात्कुर्वन्तः अञ्जन्तश्च, (पुमांसः) लक्ष्म्याः पद्मायाः संपदश्च, 'शोभासंपत्तिपद्मासु लक्ष्मीः श्रीरपि कथ्यते' इति कोशात्, निवासम् आयतनं, नित्यं सदापि निगूढम् अप्रकाशं, निधिमिव त्वां पश्यन्ति, अर्चासमाधिमतो भव-

द्विग्रहस्य सेवया सतां साक्षाद्भवत्सेवा सम्पद्यत इति भावः ; निध्यञ्जनेनाकलोचनास्सिद्धाश्च निधिं पश्यन्तीति तद्विदः । अत्र भगवतो निधिसाम्येन स्वतः पुरुषार्थत्वं पुरुषार्थान्तरप्रापकत्वं च ध्वनति ; किञ्च 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजाः' इति श्रुतिरुपबृंहिता भवति । 'दृशि रोअक्खणिअच्छावअच्छहज्झावअज्झपुलअपुलाअदेक्खावअक्खपेच्छावआसपासणिअसच्छवावक्खान्' इति दृशेः पेच्छादेशः ॥ ४५ ॥

**विहडिअनिबिडन्धारो घडन्तजोई तिलोअएक्कगहवई ।**
**दिट्ठिगओ जाण तुमं णमंतसच्च णहु ताण मोहतिआमा ॥ ४६ ॥**

छा ॥ विघटितनिबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रह(गृह)पतिः ।
दृष्टिगतो येषां त्वं नमत्सत्य न खलु तेषां मोहत्रियामा ॥

व्या ॥ **विहडिअ** इति ॥ नमतां सत्यभूत, विघटितः शकलीकृतः निबिडः गाढः अन्धकारः सादृश्यादज्ञानं पक्षे तिमिरं च येन सः, तथा घटमानं सञ्चच्छमानं ज्योतिः तेजः यस्य सः, इदमुभयसाधारणम्, त्रिलोकः त्र्यवयवो लोकः त्रिलोकः, स एव एकं गृहं, तस्य पतिः, त्रिलोकस्य एकः ग्रहपतिः भास्करश्च, त्वं, येषां पुंसां, दृष्टिगतः प्रत्यक्षः, तेषां मोहः अनात्मन्यात्माभिमानादिरूपो व्यामोह एव त्रियामा रात्रिः, आलोकोपरोधसाम्याद्रूपकम्, न खलु न भवतीति प्रसिद्धोऽयं विषयः ; 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिनैवम् ; न खलु चक्षुःपथमवतरति गभस्तिमालिनि सन्तमसहेतोस्त्रियामायाः प्रसक्तिरपीति सिद्धमिदम् । घटमानशब्दे 'शतृशानचोः' इति न्तादेशः ; 'अपतौ घरो गृहस्य' इति पर्युदासाद्घरादेशविरहे गहवई इति ग्रहपतिगृहपतिशब्दयोः रूपैक्यम् ॥ ४६ ॥

**विसअरसम्मि सुवन्ता विआरजणणेहि अवि णहु विईरंता ।**
**जीवंतमुक्कसरिसा अच्चुअ दीसंति पावणा तुह भत्ता ॥ ४७ ॥**

छा ॥ विषयरसे स्वपन्तो विकारजननैरपि न खलु विक्रियमाणाः ।
जीवन्मुक्तसदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः ॥

व्या ॥ **विसअरसम्मि** इति॥ अच्युत, तव भक्ताः त्वयि भक्तिमन्तः, विषयरसो विषयाभिनिवेश एव रसः द्रवः, तस्मिन्, स्वपन्तः अप्रबुद्धाः विषयेषु विरक्ता इति यावत्, विकारजननैः विकारजनकतया जगति प्रथितैः वनितादिपदार्थैरपि, नविक्रियमाणाः अविचलितधैर्याः, अत एव जीवन्मुक्तसदृशाः अनाविर्भूतगुणाष्टका अपि आविर्भूतगुणाष्टकैर्मुक्तैः समानाः, पावनाः स्वाभिमानेन पांसुलानपि पवित्रयन्तः, दृश्यन्ते—इत्यहो त्वदीयभक्तेर्महिमेति भावः ॥ ४७ ॥

**गंधव्वणअरसिविणअसारिच्छाणं सिरीण वणसरिआणं ।**
**णसुमरइ तुम्हगहिओ सरणागअसच्च सइमओ जीअगओ॥ ४८॥**

छा ॥ गन्धर्वनगरस्वप्नसदृक्षाणां श्रियां वनसरिताम् ।
न स्मरति त्वद्गृहीतः शरणागतसत्य सदामदो जीवगजः ॥

व्या ॥ **गंधव्व** इति ॥ शरणागतसत्य, त्वया गृहीतः स्वायत्तीकृतः, सदामदः सततहृष्टः पक्षे सर्वदा गलद्दानः, जीव एव गजः, गन्धर्वनगरसदृशां स्वप्नसदृशीनां च श्रियामेव वनसरितां वाशिकताटिनीनाम्, आगमापायित्वसाम्यादेवम्, न स्मरति सदातनभवत्स्वरूपाद्यनुसन्धानसम्भृतसम्मोदविवशाः जीवा न कदापि क्षुद्रैरपि दृश्यमानविप्रलम्भासु क्षोदीयसीषु श्रीषु रमन्ते; मदाविलानां गजानां वारिविहारैकरसिकतायाः 'अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः' इत्यादिना अवगमात्, त्वद्गृहीत इति विशेषणमहिम्ना व्यतिरेकः परिस्फुरति। स्वप्नशब्दे 'स्वार्थे तु कश्च' इति कप्रत्यये 'नात्स्वप्ने' इति नात्प्रागित्वे पस्य वत्वे 'नीवीस्वप्ने वा' इति वैकल्पिकत्वान्मत्वाभावे वलोपे 'स्वप्नादाविल्' इति आदेरच इत्वे कलोपेच सिविणअ इति रूपम्; सदृक्षशब्दस्य समृद्ध्यादित्वाद्दीर्घः, सरिच्छब्दे 'अविद्युति स्त्रियामाल्' इत्याकारः; स्मरतेः 'झर झार' इत्यादिना सुमरादेशः; गृहीतशब्दे ईकारस्य 'गभीरग इत्' इति इकारः ॥

**ण महेन्ति णाणवन्ता तरंगडिंडीरबुब्बुअसारिच्छाइं ।**
**विहिपमुहाण पआइं घणकंदलिकंदकअलिखंभसमाइं ॥ ४९ ॥**

छा ॥ न महयन्ति ज्ञानवन्तस्तरङ्गडिण्डीरबुद्बुदसदृक्षाणि ।

विधिप्रमुखानां पदानि घनकन्दलीकन्दकदलीस्तम्भसमानि ॥

व्या ॥ **ण** इति ॥ ज्ञानवन्तः भवत्स्वरूपादिविषयपरिज्ञानशालिनः, तरङ्गैः, डिण्डीरैः फेनैः, बुद्बुदैश्च सदृक्षाणि अस्थिरतया तदुपमितानि, घनेन मुस्तया कन्दलीकन्दैः कदलीस्तम्भैश्च समानि, अल्पसाराणीति भावः, विधिप्रमुखानां शतधृतिशिवशतमखानां, पदानि स्थानानि, तदधिकारानिति यावत्, न महयन्ति न बहुमन्यन्ते; सलिले वातप्रेरणवशात् तरङ्गडिण्डीरादिरूपः परिणाम उत्पन्नः क्षणात्स्वयं यथा विलीयते, तद्वदचिरकालकाल्यानि सत्ताक्षणे च कन्दलीकदलीगर्भादिवन्निस्साराणि च ब्रह्मादीनां पदान्येव'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते' 'तस्य सर्वेषु लोकेषु कामचारो भवति' 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इत्यादिभिः प्रपञ्चितं भवत्सारूप्यसालोक्यसायुज्यादिवैभवं संविदानास्तृणाय मन्यन्त इति स्थिते किं पुनः तत्तत्प्रसादसंपादितान् भोगानिति भावः । कदलीशब्दे 'अद्रुमे कदल्याम्' इति पर्युदासात् दस्य रत्वं न भवति; स्तम्भशब्दे 'स्तम्भे' इति खः । अत्र तरङ्गडिण्डीरबुद्बुदानां पूर्वपूर्वापेक्षया निस्सारत्वात् पतत्प्रकर्षत्वं नोद्भावनीयम्, उपमेयतारतम्यनिर्वाहे साकूतत्वात् ॥ ४९ ॥

**पुलइअसपरसहावा पुरिसा घेत्तूण सामिणो तुह सीलं ।**
**णाह णअसच्च सघिणा ण मुअंति कहंवि सव्वजणसोहद्दं ॥ ५० ॥**

छा ॥ दृष्टस्वपरस्वभावाः पुरुषा गृहीत्वा स्वामिनस्तव शीलम् ।

नाथ नतसत्य सघृणा न मुञ्चन्ति कथमपि सर्वजनसौहार्दम् ॥

व्या ॥ **पुलइअ** इति ॥ नतसत्य, नाथ, दृष्टः प्रत्यक्षवत्परिज्ञातः स्वपरस्वभावः स्वेषां परस्य भवतश्च स्वभावः यैः ते, पुरुषा विद्वांसः, स्वामिनः, तव, शीलं सद्वृत्तं स्वभावं वा, गृहीत्वा अनुरुध्य, घृणया कृपया सह वर्तमानाः, कथमपि कथंचिदपि, सर्वेषु जनेषु जनममात्रधर्मस्वपि, सौहार्दं मैत्रीं, न मुञ्चन्ति न जह-

ति; सर्वथा तुङ्गस्य एकान्तमङ्गलायतनस्यापि ते तद्विसजातीयेषु वत्सलभावमालक्ष्य भवदनुवर्तनमनीषया भागवता अपि किंपचानेषु मादृशेष्वपि प्रणयसरसाशया भवन्तीति सङ्ग्रहः । 'दृशिरोअक्खणिअच्छ' इत्यादिना दृशेः पुलआदेशः; ग्रहेः क्त्वाप्रत्यये 'घेत्तुंतव्यक्त्वासु ग्रहेः' इति घेत्तूण इति रूपम्; कृपादित्वादृ-णापदऋकारस्य इत्; सव्वजणेइत्यत्र 'समासेऽन्तर्विभक्तिनिमित्तकं पदत्वं वे-तिवाच्यम्'इति वार्तिकात्पदत्वविवक्षायामादित्वात् जलोपाभावः; पदत्वाविवक्षा-यामनादित्वाल्लोप इति बोद्धव्यम् ।। ५० ।।

**माणमएसामच्छरडंभासूआभआमरिसलोहमुहा ।**
**दीसंति ण मोहसुआ दोसा दासाण सच्च तुह भत्ताणं ॥ ५१ ॥**

छा ।। मानमदेर्ष्यामत्सरदम्भासूयाभयामर्षलोभमुखाः ।
दृश्यन्ते न मोहसुता दोषा दासानां सत्य तव भक्तानाम् ।।

व्या ।। **माण** इति ।। दासानां सत्य, तव भक्तानां भवद्भक्तसम्बन्धिनः, मानादयः मोहस्य सुताः मोहकार्यभूताः, न दृश्यन्ते, मानादिवैदेशिका भवन्ति भवद्भक्ता इति भावः; अत्र—मानः-चित्तसमुन्नाहः, मदः-मोहहर्षसङ्करः, ई-र्ष्या-अक्षान्तिः, मत्सरः-अन्यशुभद्वेषः, दम्भः-आत्मोत्कर्षप्रकाशनेच्छा, असूया-परकीयगुणेषु दोषारोपः, भयम्-अनिष्टागमशङ्का, अमर्षः-अपमाननाद्यसहनम्, लोभः-वस्तुष्वभिलाषः। 'दम्भदरदर्भे' इत्यादिना दम्भशब्दे दस्य डः; अमर्षशब्दे 'हर्षामर्षे' इत्यादिना अन्त्यहलः प्रागित्वम् ।। ५१ ।।

**जाण मई इअरमुही कालो सअलो वि ताण कलिवित्थारो।**
**जे तुह पअम्मि पवणा णत्थि कली णाअवइणअरवइ ताणं॥५२॥**

छा ।। येषां मतिरितरमुखी कालस्सकलोऽपि तेषां कलिविस्तारः ।
ये तव पदे प्रवणा नास्ति कलिर्नागपतिनगरपते तेषाम् ।।

व्या ।। **जाण** इति ।। नागपतिनगरपते अहीन्द्रपुरविभो, येषाम् अभव्यानां,

मतिः, इतरमुखी भवदितरविषयिणी ; तेषां, सकलोऽपि कालः कृतयुगादिरपि, कलेः कलियुगस्य विस्तारः प्रपञ्चः ; ये (पुनः) तव, पदे स्थाने चरणे वा, प्रवणाः प्रह्वाः, साभिलाषा इति यावत् ; तेषां, कलिः, नास्त्येव ; 'कलौ कृतयुगं तस्य कलिस्तस्य कृतेयुगे । यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः ' इति भावः । पतिशब्दस्य सम्बुद्धौ पस्य वत्वे तलोपे 'सोर्लुक्' इति पाक्षिको लुक् ॥

**अच्चासण्णविणासा अच्चुअ पेच्छंति तावए भत्तजणे ।**
**मोक्खरुईण सुमग्गे मूढा दिअहअरमण्डलम्मिव छिद्दम्॥ ५३ ॥**

छा ॥ अत्यासन्नविनाशा अच्युत पश्यन्ति तावके भक्तजने ।
मोक्षरुचीनां सुमार्गे मूढा दिवसकरमण्डल इव च्छिद्रम् ॥

व्या ॥ **अच्चासण्ण** इति ॥ अच्युत, अतितराम् आसन्नः सन्निहितः विनाशो येषां ते, ( पुरुषाः ) मोक्षे रुचीनां मनोरथानां, मोक्षे रुचिः येषां तेषामिति च, सुष्ठु मार्गे प्रापके, तावके भवदीये, भक्तजने, दिवसकरस्य सूर्यस्य मण्डले बिम्ब इव, छिद्र दूषण रन्ध्रं च, 'छिद्रं दूषणरन्ध्रयोः' इति मेदिनी, पश्यन्ति ; अमृतप्राप्तिहेतुषु भगवद्भक्तेषु कादाचित्के दोषेऽपि जायमाने तदनुशीलनं विनाशोदर्कमिति पञ्चमवेदादिप्रपञ्चितमिदं रहस्यम् ; आतिवाहिकानां प्रधानभूते सवितरि मोक्षद्वारायिते रन्ध्रालोकनं मरणोदर्कमिति रिष्टतत्त्वविदः ; 'यस्यर्क्षे सच्छिद्रस्तस्य विनाशः क्षितीशस्य ' इति वराहमिहिरसंहितायाम् । दिवसशब्दे 'प्रत्यूषदिवसदशापाषाणे तु हः' इति वा हः ॥ ५३ ॥

**णिखुडिअदुम्माणघणा णिम्मलगुणघडिअतारआपब्भारा ।**
**भासंतभत्तिजोण्हा णअसच्च फुरंति णहणिहा तुह भत्ता ॥ ५४ ॥**

छा ॥ निखण्डितदुर्मानघना निर्मलगुणघटिततारकाप्राग्भाराः ।
भासमानभक्तिज्योत्स्ना नतसत्य स्फुरन्ति नभोनिभास्तव भक्ताः ॥

व्या॥ **णिखुडिअ** इति ॥ नतसत्य, तव,भक्ताः,निखण्डितः निरस्तः दुर्मानः घनः मेघ इव यैस्ते, निर्मलैः दोषासङ्कीर्णैः गुणैः विनयमाहात्म्यादिभिः घटितः

संबद्धः तारकाणां नक्षत्राणां प्राग्भारः सङ्घः येषां ते, गुणैः तारकाभिरिव विराजमाना इत्यर्थः, भासमाना प्रकाशमाना भक्तिरेव ज्योत्स्ना चन्द्रिका येषां ते तादृशाश्च (सन्तः), नभोनिभाः नभसा सदृशाः, नित्यसमासोऽयमस्वपदविग्रहः, 'स्युरुत्तरपदे त्वमी । निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः; स्फुरन्ति द्योतन्ते । नभश्शब्दे अन्त्यहलो लोपे 'स्नमदामशिरोनभोनरि' इति पर्युदासान्नपुंसकत्वम् ॥ ५४ ॥

**ण हु जमविसअम्मि गई णअसच्च पअंवुअं तुह पवण्णाणं ।**
**खलिआण वि जहजोग्गं सिक्खा सुद्धंतकिंकराणव लहुई ॥ ५५॥**

छा ॥ न खलु यमविषये गतिर्नतसत्य पदाम्बुजं तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षा शुद्धान्तकिङ्कराणामिव लघ्वी ॥

व्या ॥ **ण हु** इति ॥ नतमत्य, तव, पदाम्बुजं, प्रपन्नानाम् उपायतया श्रितानां, यमस्य विषये देशे गोचरे वा, गतिः प्राप्तिः, न खलु न भवतीतीदं 'न खलु भागवता यमविषयं गच्छन्ति' 'परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्' इत्यादिभिः प्रथितम् ; तेषामपराधे का प्रतिपत्तिः? अत आह— स्खलितानामपि धर्म्यात्पथो विच्युतानामपि, (तेषां) यथायोग्यं योग्यतानतिरेकेण, लघ्वी अल्पकालानुभाव्या भगवत्प्राप्तिरूपमहापुरुषार्थाविरोधिनी च,शिक्षा दण्डः, (भवति); कुत्रेदं दृष्टं, यदपराधसाम्येऽपि दण्डो लघुरिति ? तदाह—शुद्धान्ते अन्तःपुरे ये किङ्कराः भृत्याः, तेषामिव : तेहि प्रत्ययिततमाः दोषेऽपि न निष्ठुरं दण्ड्यन्ते इति सम्प्रदायः: 'लघुर्दण्डः प्रपन्नस्य राजपुत्रापराधवत्' इतीदं प्रसिद्धम् ; अयं च भवतो दयायाः प्रपत्तेर्वा महिमेति भावः। स्खलितशब्दे 'ष्कस्कोर्नाम्नि' इति सलोपः: लघ्वीशब्दे 'तन्व्याभे'इति संयुक्तस्य अन्त्यहलः प्रागुत्वम्।।

**कम्मगइदोसदुहिआ कअंतभिउडीभुअंगिदंसणतत्था ।**
**अच्चंति तुज्झ चलणे अच्चुअ पब्भट्ठवम्महरसासाआ ॥ ५६ ॥**

छा ॥ कर्मगतिदोषदुःखिताः कृतान्तभ्रुकुटीभुजङ्गीदर्शनत्रस्ताः ।
अर्चन्ति तव चरणावच्युत प्रभ्रष्टमन्मथरसास्वादाः ॥

व्या॥**कम्मगइ** इति॥ अच्युत, कर्मणां या गतयः प्राप्याः स्वर्गादयः, तासां दोषेण अल्पास्थिरत्वादिना दुःखिताः सञ्जातदुःखाः,(तथा)कृतान्तस्य यमस्य भ्रुकुटी भ्रुवोः कूणनं'भ्रुवोर्मूलसमुत्क्षेपाद्भ्रुकुटी परिकीर्तिता इति निरुक्तलक्षणा; सैव भुजङ्गी कृष्णसर्पस्त्री कृष्णवर्णत्वात् तरलत्वात् क्रोधसूचकतया भीषणत्वात् अनर्थदायित्वाच्च, तस्याः दर्शनात् त्रस्ताः चकिताः, (किञ्च) प्रभ्रष्टः दूरापवर्जितः यः मन्मथसम्बन्धी रसः कामाभिलाषः, तस्य आस्वादः चर्वणं येभ्यस्ते (च सन्तः) तव, चरणौ, अर्चन्ति : यत एवं कर्मभिर्निर्विण्णाः यमविषयगमनभीता विषयरसास्वादवैदेशिकाश्च प्रकृतिललितौ शरणागतरक्षणविचक्षणौ च देवदेवस्य भवतश्चरणावुपायतया अध्यवस्यन्ति, ततस्तेषां युक्त एव कालीच्यां प्रवेशविरह इति पूर्वोक्तस्य समर्थकमिदम् ; 'यथाक्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' इति श्रुतो यथाक्रतुन्याय एवात्र प्रमाणम् । दुःखितशब्दे 'न वा तीर्थदुःखदक्षिणदीर्घे' इति पाक्षिकं ह्रत्वम् ; भ्रुकुटीशब्दे 'रो भ्रुकुटीपुरुषयोरित्' इति रेफगतस्योकारस्य इत्वम् ; कलोपः त्रस्तशब्दे 'सर्वत्र लवराणाम्' इति रलोपः, स्तस्य थश्च ; चरणौ इत्यत्र द्विवचनस्य 'द्विवचनस्य बहुवचनम्' इत्यनुशासनसिद्धत्वाच्छस् ; मन्मथशब्दे 'मन्मथे' इति मस्य वः ॥

अ ॥ संप्रति एकान्तिषु महती भवतः प्रीतिरित्याह—

**आलग्गइ तुह चलणे अच्चुअ विहिणा वि अच्चणा आअरिआ ।**
**जा एक्कंतिपउत्ता सेसं व सअं सिरेण पडिगेण्हसि तं ॥५७॥**

छा ॥ आलगति तव चरणेऽच्युत विधिनाऽप्यर्चनाऽऽचरिता ।
यैकान्तिप्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥

व्या ॥ **आलग्गइ** इति॥ अच्युत, विधिना ब्रह्मणा साक्षाद्भवन्नाभिनलिनयोनिना जगतस्स्रष्टृतयाऽधिकारितेनापि, आचरिता समर्पिता, अर्चना सर्वाराध्यस्य भवतः, पूजा, तव सर्वेश्वरस्य भवतः, चरणे पादे, आलगति संक्रामति ; (इति स्थिते) एकान्तिभिः भवदतिरिक्तोपायोपेयपरिग्रहविमुखैः आत्मार्पणतत्त्ववेदिभिर्म-

शाभागैः प्रयुक्ता केवलभवत्किङ्करभूतात्मानुष्ठेयत्वप्रतिपत्तिमात्रेणाचरिता, तां, स्वयं—न पुनरितरान् द्वारीकृत्य, (आदरात् ),शेषाम् उपभुक्तमुक्तं वस्त्रादिकं प्रभुणा प्रेष्याय पूर्णपात्रीकृतमिव, 'शेषस्सङ्कर्षणे वधे । अनन्ते ना प्रसादेन स्वनिर्माल्यार्पणे स्त्रियाम्' इति मेदिनी, 'तथेति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे, इति कुमारसम्भवे ; शिरसा परमादरावनतेन मौलिना, प्रतिगृह्णासि आदत्से ; युक्तमिदं भवतः, यएवमाह स्म 'स च मम प्रियः' 'स महात्मा सुदुर्लभः' 'ज्ञानी त्वात्मैव मे मतम्' इति ; तथात्वं च 'याः क्रियास्सम्प्रयुक्ताः स्युरेकान्तगतबुद्धिभिः । तास्सर्वाश्शिरसा देवः प्रतिगृह्णाति वै स्वयम्' इति निर्दिष्टम्। लगतेः शकादित्वात्'शकगे' इत्यन्त्यस्य द्वित्वम् ; स च 'शकिर्मुगिर्लगिसिची अटतिर्लुटतिस्त्रुटिः । कुपिर्जेमिस्तमिश्चेति शकादिगण ईरितः' इति निदर्शितः ; ग्रहधातोः 'ग्रहेर्गिरुवारगेण्हवलहरपग्गाहिपच्चुआः' इति गेण्हादेशः ॥ ५७ ॥

अ ॥ पुनस्तदेव प्रपञ्चयति—

**तुह मुहजोण्हादाविअमाणससिअंतपवहसंणिहबाहे ।**
**अच्चुअ ण मुअसि भत्ते कलम्बगोलणिहकंटअंतणिअंगे ॥**

छा ॥ तव मुखज्योत्स्नाद्रावितमानसशशिकान्तप्रवाहसंनिभबाष्पान् ।
अच्युत न मुञ्चसि भक्तान् कदम्बगोलनिभकण्टकन्निजाङ्गान् ॥

व्या ॥ **तुह** इति ॥ अच्युत, तव भवदीयस्य, मुखस्य वदनस्यैव चन्द्रस्य ज्योत्स्नया चन्द्रिकया प्रकाशेन द्रावितं द्रवीकृतं मानसं मन एव यः शशिकान्तः चन्द्रकान्तशिला तस्य प्रवाहसन्निभः लहरीसदृशः बाष्पः आनन्दाश्रु येषां तान् , ( तथा ) कदम्बगोलनिभं वर्षाकदम्बस्कन्धसमं कण्टकत् संजातपुलकं निजम् अङ्गं येषां तान् , भक्तान् न मुञ्चसि न त्यजसि ; 'मित्रभावेन संप्राप्तं न त्यजेयं कथंचन । दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्' इति विहितप्रतिज्ञः सत्योद्यसार्वभौमो भवान् सावद्यानपि भक्तान् आह्लादशीतनेत्रसलिलान् घनतरपुलकनिचोलिततनूलतांश्च न जातु जहीत इति भावः । पूर्वार्धे परम्परितरूपकानु-

प्राणिता आर्थी समासगा लुप्तोपमा ; उत्तरार्धे तु शुद्धा सैव—इत्यनयोर्नैरपेक्ष्यात् संसृष्टिः । ज्योत्स्नाशब्दे ' श्रण ' इत्यादिना ण्हादेशः ; ' घञि वा ' इति प्रवाहशब्दे ह्रस्वः ; 'बाष्पे होऽश्रुणि' इति बाष्पशब्दे स्तोर्हः ; ' लः पलितनितम्बकदम्बे ' इति दस्य लादेशः ; ' कण्टअन्त ' इति शतरि रूपम् ॥ ५८ ॥

**सव्वेसु वि णिव्वेरा सरणागअसच्च गहिअसासअधम्मा ।**
**गअसंगा तुह भत्ता जंति तुमं एव्व दुल्लहं इअरेहिं ॥ ५९ ॥**

छा ॥ सर्वेष्वपि निर्वैराश्शरणागतसत्य गृहीतशाश्वतधर्माः ।
गतसङ्गास्तव भक्ता यान्ति त्वामेव दुर्लभमितरैः ॥

व्या॥**सव्वेसु** इति॥शरणागतसत्य, सर्वेषु जन्तुष्वपि निर्वैराः वैरायमाणानामपि कर्मवशत्वानुसंधानेन दुःखानुभवस्य प्रारब्धनाशकत्वेन तत्कारिषु कृतज्ञताभावनया स्वयमकुतोभयत्वाच्च विरोधगन्धरहिताः, (तथा) गृहीतः अवलम्बितः शाश्वतः अनपायः धर्मः सिद्धोपायभूतः 'रामो विग्रहवान् धर्मः' 'ते वदन्ति महात्मानः कृष्णं धर्मं सनातनम् ' इत्यादिनिर्दिष्टः यैस्ते, (किंच) गतः अपगतः सङ्गः हेयपदार्थेष्वभिष्वङ्गः येषां ते, तव, भक्ताः, इतरैः अनेवंप्रकारैः पशुप्रायैः पांसुलपादैः दुर्लभम् अलभ्यं, त्वां भवन्तमेव, यान्ति प्राप्नुवन्ति 'देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि' इति स्मरणात् ॥ ५९ ॥

**अहिवइणअरिंद तुमं आसण्णंवि गअणं व सइ दुग्गेज्झं ।**
**विसएसु विलग्गन्ता तूरन्ता वि ण लहंति डोलन्तमणा॥ ६०॥**

छा ॥ अहिपतिनगरीन्द्र त्वामासन्नमपि गगनमिव सदा दुर्ग्राह्यम् ।
विषयेषु विलगन्तस्त्वरमाणा अपि न लभन्ते डोलायमानमनसः॥

व्या ॥ **अहिवइ** इति॥ अहिपतिनगरीन्द्र, आसन्नमपि अन्तरात्मतया सततसन्निहितमपि, गगनम् आकाशमिव, सदा, दुर्ग्राह्यं ग्रहीतुमशक्यं, त्वां, विषयेषु शब्दादिषु, विलगन्तः सज्जन्तः,(अत एव) डोलायमानमनसः एकतो विषयाभिषङ्गेण परतो भवत्प्राप्तीच्छया च द्वैराज्येनेव आकुलीक्रियमाणाः, त्वरमाणा अपि भवद्दर्शनकुतुकाकृष्टा अपि त्वां, न लभन्ते न प्राप्नुवन्ति; 'ध्यायतो विषयान्पुंसस्सङ्गस्तेषूपजायते । सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ क्रोधाद्भव-

ति संमोहः संमोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति' इति स्मृतायाः कारणमालायाः विनाशोदर्कत्वादिति भावः । ग्राह्यशब्दे ह्यस्य 'ध्यह्योर्झल्' इति नित्यं झः, 'शय्यादौ' इत्यादेरवर्णस्य एत्वं च ; 'ञि त्वरा संभ्रमे' इत्यस्य 'तूरश्शतृ तिङि' इति शतरि तूरादेशः ॥ ६० ॥

अ॥ ईदृशामपि भक्तानामत्र विभूतौ दर्शनेन भगवद्भक्तेः फलदर्शने व्यभिचारोऽङ्गीकार्य इति चोद्यं परिहरति—

**भत्ता तावअसेवारसभरिआ सअलरक्खणूसुअरुइणा ।**
**करणाइ धरन्ति चिरं कंखिअमोक्खा वि अच्चुअ तुए ठविआ ॥**

छा ॥ भक्तास्तावकसेवारसभरितास्सकलरक्षणोत्सुकरुचिना ।
करणानि धरन्ति चिरं काङ्क्षितमोक्षा अप्यच्युत त्वया स्थापिताः ॥

व्या ॥ **भत्ता** इति ॥ तावकसेवायां परमव्योमनिलयभवत्प्राप्त्यनन्तरभाविभवत्कैङ्कर्यसाम्राज्ये यो रसः अनुरागः, तेन भरिताः पूरिताः, भवता कृपाविवशेन परमभक्तिपर्यन्तमधिकारधुरां लम्भिताः, सकलानाम् अतादृशां मादृशां रक्षणेन उत्सुका उत्कण्ठिता रुचिः अभिष्वङ्गः यस्य तेन, 'रुचिस्तु दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः' इति मेदिनी, ईशेशितव्यसम्बन्धादनिदंप्रथमान्मादृशानहम्मानमदान्धानपि हातुमनीहमानेन भवता,स्थापिताः सजातीयानिमाननुष्ठानोपदेशैरपि नाम समुद्धरेयुरेत इति अनुन्मुक्ताः,चिरं यावद्भवत्सङ्कल्पं,करणानि गात्राणि, धरन्ति वहन्ति; न तु प्रारब्धशेषादिकं तादृशानामवस्थाने हेतुः, तेषां ज्ञानाग्निनिर्दग्धनिखिलकर्माशयत्वात् ईश्वरस्य फलवितरणे वैमुख्यलेशस्याप्यभावाच्च मन्दानुजिघृक्षैव तदवस्थापने हेतुरित्याशयः। उत्सुक इत्यत्र 'दो दोऽनुत्साहोत्सन्न ऊच्छसि'इति सकारे परे उकारस्य दकारमन्तर्भाव्य ऊकारादेशः; रक्खणशब्देन सह सन्धौ अचोऽचिपरे लोपः; स्थापितशब्दस्य उत्खातादित्वात् ह्रस्वादेशः॥

अ ॥ प्रकारान्तरेण तमेवार्थमनुभवति—

**ठिरगुणगिरिजाणिएहिं संतारेसि णअसच्च णिअभत्तेहिं ।**
**जम्मपरिवाडिजलहिं जंगमठिरसेउदंसणिज्जेहि जणे ॥ ६२ ॥**

छा ॥ स्थिरगुणगिरिजनितैस्संतारयसि नतसत्य निजभक्तैः ।
जन्मपरिपाटीजलधिं जङ्गमस्थिरसेतुदर्शनीयैर्जनान् ॥

व्या ॥ **ठिर** इति ॥ नतसत्य, स्थिराः नित्यमविनाभूताः गुणाः ज्ञानभक्त्यादय एव स्थिराः परिणामान्तरहीनाः गिरयः, तैः जनितैः गुणविशिष्टतया सङ्कल्पितसत्ताकैः (अन्यत्र) तन्निर्मितैः, (अतएव) जङ्गमसेतुवत् दर्शनीयैः पवित्रीकरणसाम्यात्सेतुसम्भावनीयैः स्थिरसेतुतया दर्शनीयैः 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति' 'विष्णोः कर्माणि पश्यत' इति शास्त्रात्, निजभक्तैः भागवतैः, जन्मपरिपाटीं जन्मपरम्परामेव जलधिं, जन्मोक्तिर्मरणादिकमप्याक्षिपति, जलधित्वरूपणादपारत्वदुरुत्तरत्वादिकं व्यज्यते, जनान् वृत्तविद्यादिहीनतया जननमात्रकृतपरिकरानपि, सन्तारयसि ; अत्रत्यनिजभक्तशब्दस्याचार्यपरत्वात् 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः। तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्' 'पापिष्ठः क्षत्रबन्धुश्च पुण्डरीकश्च पुण्यकृत्। आचार्यवत्तया मुक्तौ तस्मादाचार्यवान्भवेत्' इत्यादिकेनैकार्थ्यात् आचार्याभिमानरूपः आचार्यनिष्ठाव्यपदेश्यः चरमोपायोऽयमुपदिश्यते ; सन्तारणे भगवतः कर्तृत्वं च तादृशाचार्योपसदनप्रतिबन्धकप्रहाणादिसङ्कल्पवैशिष्ट्येन ; एतादृशमपि भगवतः कृपिफलमिति निश्चयः ॥ ६२ ॥

अ ॥ पुनरपि तादृशभागवतवैभवोद्गारसुखेन प्रपन्ननिष्ठामुपदिशति—

**पसमिअभवन्तरभआ पत्तं पत्तं हिअं ति परिपेक्खन्ता ।**
**भावेन्ति तुज्झ भत्ता पिआइहिं व णअसच्च पच्छिमदिअहं ॥ ६३॥**

छा ॥ प्रशमितभवान्तरभयाः प्राप्तंप्राप्तं हितमिति परिप्रेक्षमाणाः ।
भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिमदिवसम् ॥

व्या ॥ **पसमिअ** इति ॥ नतसत्य, प्रशमितं भगवति महता विश्वासेन क्षपितं भवान्तरात् जन्मान्तरात् भयं येषां ते, (अतः) प्राप्तंप्राप्तं पूर्वपूर्वदिनातिक्रमेण समागतं दिनं व्याप्य, हितम् आशासितभगवत्सान्निध्यविलम्बपरिहारकतया चिरारब्धसंसृतिकालरात्रिप्रत्यूषायिततया च मङ्गलोदर्कमिति, इतिरयं प्रकारार्थः, परिपश्यन्तः आलोकयन्तः, दृशिरसौ ज्ञानार्थः, पश्चिमं चरमं, दिवसम् अन्त्यप्रयाणवासरं, प्रियं प्रीतिहेतुम्, अतिथिम् आगन्तुकमिव सम्भावनीयत्वेन,

भावयन्ति निश्चिन्वन्ति ; गलत्सु दिवसेषु साधारण्येन यद्यपि धन्यानां प्रीतिरेषां, तथाप्यन्तिमदिवसे तु सा वाचामभूमिः ; यदाहुः 'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्' इति ; अयमाचार्योऽन्यत्रापीत्थमनुसन्धत्ते 'अन्येषामजहत्त्रिवर्गमनसामायुःक्षयत्रासदैरप्रत्यूहगतिक्रमैरवितथव्यापारधन्यस्य मे । भ्रश्यद्भिर्दिवसैः प्रवृद्धवृजिनाकूपारपारीभवन् प्रत्यासीदति मुक्तिवासर इति प्रीतिः प्रतिष्ठाप्यते' इति ; विरहोत्कण्ठितासु दृष्टोऽयं प्रकारो विषयवैलक्षण्याधीनया प्राप्यत्वरयाऽन्यत्रापि ; यदाह स्म कालिदासः 'शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः' इति । प्रादीक्षतेः क्षस्य खे पेक्खन्ता इति रूपसिद्धिः ; पश्चिमशब्दे 'श्चोतत्तिश्लेहादौ लुग्वाच्यः' इति शलोपे शेषद्वित्वम् ; दिवसशब्दे 'प्रत्यूषदिवसदशापाषाणे तु हः' इति वा हः ॥

अ ॥ कृतकार्याणामाचार्याणां परगतिप्रदानेन भगवदुपकारमाह—

**पअडतिमिरम्मि भुवणे पत्तपडिट्ठविअपरमणाणपईवा ।**
**णिज्जन्ति अच्चुअ तुए णिअं पअं सइसअंपहं कअकज्जा ॥ ६४ ॥**

छा ॥ प्रकटतिमिरे भुवने पात्रप्रतिष्ठापितपरमज्ञानप्रदीपाः ।
नीयन्तेऽच्युत त्वया निजं पदं सदास्वयंप्रभं कृतकार्याः ॥

व्या ॥ अच्युत, प्रकटतिमिरे स्फुटान्धतमसे प्रकाशाज्ञानेच, भुवने अत्र लोके, ते महान्तः, पात्रे योग्यजन एव भाजने प्रतिष्ठां प्रापितं परमं निरतिशयं ज्ञानमेव प्रदीपः यैस्ते वस्तुयाथात्म्यावबोधाय सन्निधापितप्रदीपोपमपरमज्ञानाः, (अत एव) कृतं कार्यं यैस्ते, सदास्वयंप्रभम् अजडत्वादात्मसत्ताव्याप्तप्रकाशं, निजम् आत्मीयं पदं परमव्योमशब्दितं, नीयन्ते अर्चिरादिपथेन भवतैव प्राप्यन्ते ॥ ६४ ॥

**दिढतिव्वभत्तिणअणा परिपेच्छन्ता अहिंदउरणाह तुमं ।**
**पत्ता तुह साउज्जं पन्ति पूरेंति पण्णइंदमुहाणं ॥ ६५ ॥**

छा ॥ दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्रपुरनाथ त्वाम् ।
प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम् ॥

व्या ॥ **दिढ इति** ॥ अहीन्द्रपुरनाथ, दृढा अविचाल्या तीव्रभक्तिः निरतिशयदशापन्नोऽनुराग एव नयने, अवलोकनहेतुतया नयनव्यपदेशसहत्वम्, येषां ते, स-

न्तः, त्वां 'भक्तिक्रीतो जनार्दनः' इति प्रथितं भवन्तं, परितः स्वरूपतो रूपतो गुणादिभिश्च सह पश्यन्तः दर्शनसमानाकारध्यानविषयीकुर्वन्तः, तव, सायुज्यं भोक्तव्याविशेषं, 'सायुज्यमुभयोरत्र भोक्तव्यस्याविशिष्टता' इतीदं व्याख्यातम्, प्राप्ताः, पन्नगेन्द्रमुखानां शेषादीनां नित्यं भवत्सेवैकनिरूपणीयानाम् अनभिज्ञातप्रकृतितत्कार्याणां नित्यसूरिवराणां, पङ्क्तिं मालां, पूरयन्ति स्वयमप्यस्पृष्टसंसारगन्धा इव तत्साधर्म्यात्तन्मध्ये गणनीया भवन्ति । पङ्क्तिशब्दे क्तिनः कलोपे पञ्चेर्नुमः 'हलि ङञणनानाम्' इति बिन्दुः; 'वर्गेऽन्त्यः' इति नकारश्च ॥ ६५ ॥

**सण्णअसुलहं अच्चुअ समाहिसोवाणकमविलंबविमुहिआ ।**
**सरणं गंतूण तुमं मुत्ता मुउउंदखत्तबंधुप्पमुहा ॥ ६६ ॥**

छा ॥ सन्नतसुलभमच्युत समाधिसोपानक्रमविलम्बविमुखिताः ।
शरणं गत्वा त्वां मुक्ता मुचुकुन्दक्षत्रबन्धुप्रमुखाः ॥

व्या ॥ **सण्णअ** इति॥ अच्युत, समाधेः यः सोपानक्रमः उत्तरोत्तरदशाक्रमणपरिपाटी, तया संभावितात् विलम्बात् विमुखिताः, चिरतरोपासनावशादिन्द्रियजयाभ्यासेन मनसो निग्रहः, ततः परं जीवात्मदर्शनम्, तत उपरि परमात्मनिदिध्यासनम्, तेन दृढभूमिभूतेन अहरहरभ्यासाधेयातिशयेन कर्मयोगज्ञानयोगविहितावष्टम्भेन यमनियमादिमता चिरादप्यन्तराऽन्तरायविधुरेण मोक्षप्राप्तिरिति सोऽयं क्रमः क्षणमपि भगवद्विरहमसहमानस्य कथं क्षेमाय संपद्येतेत्याकूतम्; त्वां सहायान्तरनिरपेक्षरक्षणक्षमं सिद्धोपायभूतं, शरणम् उपायं, गत्वा प्राप्य, मुचुकुन्दक्षत्रबन्धुप्रमुखाः बहवः, मुक्ताः यथोक्तकारिणा भवतैव मोचिताः; अतो विश्वसनीयोऽसि त्वमिति भावः ॥ ६६ ॥

अ ॥ मुक्तस्य वैभवमाह—

**देवाण पसुसमाणो जंतू गंतूण देवणाह तुह पअं ।**
**तेहिं चिअ सव्वेहिं संसरमाणेहि होइ सइदिण्णबली ॥ ६७ ॥**

छा ॥ देवानां पशुसमानो जन्तुर्गत्वा देवनाथ तव पदम् ।
तैरेव सर्वैस्संसरद्भिर्भवति सदा दत्तबलिः ॥

व्या ॥ **देवाण** इति ॥ देवनाथ, देवानां भवद्व्याप्यतया प्रसिद्धानां विधिशि

वादीनां, पशुसमानः उपकरणभूतः 'यथा पशुरेवं स देवानाम्' इत्यनात्मविदो देवानामुपकरणत्वं दर्शयति श्रुतिः' इति भाष्यम् । जन्तुः यथाजातोऽपि, तव करुणाकरस्य आपन्नवत्सलस्य भवतः, पदम् उपायानुष्ठानदशायां चरणं प्राप्तिदशायां परव्योम च, गत्वा शरणं प्राप्य पुरुषार्थरूपतयाऽधिष्ठाय स्थितः, सर्वैः सकलैः, संसरद्भिः बद्धावस्थामजहद्भिः, तैरेव, सदादत्तबलिः सर्वदासमर्प्यमाणोपहारः, भवति; इत्यहो ते महिमा; प्रथममयं यदाराधनोपकरणं, हन्त स एव भवत्प्राप्तिवशादासाद्य परमपुरुषार्थमधस्तनैरातिवाहिकैस्तैस्सम्भाव्यते, 'सर्वेऽस्मै देवा बलिमावहन्ति' इति श्रुतिरत्रानुसन्धेया। 'णइ चेअ चिअ व्व एवार्थे' इति चिअ अवधारणे, 'नियमोऽनात्मनेभाषापरस्मैपदिनोरिह' इति पदानियमात् संसरमाणशब्दः; ताच्छीलिकश्चानश् वा ॥ ६७ ॥

अ ॥ मुमुक्षोः मुक्तिकामनायां भगवत्कटाक्षस्यैव मौलिभूतत्वमुपक्षिपति—

**मोहंधारमहण्णवमुच्छिअमाआमहारअणिपच्चूहो ।**
**अच्चुअ तुज्झ कडक्खो विमुत्तिपत्थाणपुढमपरिअरबंधो॥६८॥**

छा ॥ मोहान्धकारमहार्णवमूर्च्छितमायामहारजनीप्रत्यूषः ।
अच्युत तव कटाक्षो विमुक्तिप्रस्थानप्रथमपरिकरबन्धः ॥

व्या॥**मोह** इति॥अच्युत, मोहः अविद्यैवाज्ञानविरोधित्वात् अन्धकारः, स एव महान् अर्णवः प्रसिद्धार्णवादपि दुस्तरत्वात्, तत्र मूर्च्छिता संमुच्छ्रिता तेन मूर्च्छितानां सम्बन्धिनी वा, या माया 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति निर्दिष्टा, सैव महती रजनी कालरात्रिः, तस्याः प्रत्यूषः विरामहेतुत्वात्प्रभातं, तव भवतः आविर्भूतकरुणारसस्य, कटाक्षः अपाङ्गालोकः. विमुक्तिप्रस्थानस्य मोक्षप्रयाणस्य प्रथमः परिकरबन्धः गात्रिकाबन्धः यत्नविशेष इति यावत्, 'एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले' इत्युक्तदिशा कस्मिंश्चिदविद्याकर्मवासनारुचिप्रकृतिसम्बन्धरूपे संसृतिचक्रे निर्गममार्गमजानतः परिभ्राम्यतो जीवस्य 'विष्णोः कृपा काप्युपजायते' 'जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकस्स तु विज्ञेयः स वै मोक्षार्थचिन्तकः' इति भगवत्कटाक्ष एव सत्त्वोन्मेषद्वारा मुमुक्षां सत्सङ्गम् आचार्यसमाश्रयणं च उत्पाद्य मोक्षसाम्राज्य-

मनुभावयतीति पश्चात्तनस्य सकलस्यापि सम्मोदोदयस्य भवत्करुणाकटाक्ष एव निदानमिति भावः । प्रत्यूषशब्दे 'प्रत्यूषदिवस' इत्यादिना षस्य हः; प्रथमशब्दे 'प्रथमे प्थोः' इति क्रमपक्षे पकारादकारस्योत्वम्; 'प्रथमशिथिलमेथिशिथिरनिषधेषु' इति तोर्ढः ॥ ६८ ॥

अ ॥ अनादिकालप्रवृत्तानन्तापराधानपि भविनो मोचयतस्तव कीर्तनमेव निश्श्रेयसनिदानमित्याह—

**मोक्खसुहरुक्खमूलं मोहजराउरमहारसाअणपवरं ।**
**सअलकुसलेक्कखेत्तं किंकरसच्च तुह कित्तणं अमअणिहं॥ ६९ ॥**

छा ॥ मोक्षसुखवृक्षमूलं मोहजरातुरमहारसायनप्रवरम् ।
सकलकुशलैकक्षेत्रं किङ्करसत्य तव कीर्तनममृतनिभम् ॥

व्या ॥ **मोक्खसुह** इति ॥ किङ्करसत्य, तव कीर्तनं कल्याणगुणगणौघमहार्णवस्य परावरस्य पुंसो भवतो नामाद्याम्रेडनं, मोक्षसुखमेव वृक्षः तस्य मूलं वृक्षस्य मूलमिव मोक्षमहानन्दस्याधारः, मोहेनैव जरया आतुराणां दूनानां महत् रसायनान्तरापेक्षया गुणवत् रसायनप्रवरं 'लाभोपायो हि शस्तानां रसादीनां रसायनम्' इति लक्षितः औषधविशेषः, तस्य जराहरत्वं 'दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः । प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् । वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात्' इत्यादिना सिद्धम्; सकलानां (देहिनां) कुशलस्यैव (कलमस्य) एकम् अद्वितीयं क्षेत्रम् उत्पत्तिस्थानम्, अमृतनिभम् अमृतसमानम्, आस्वाद्येष्वमृतमिव कीर्तनीयेषु तदात्वे आयत्यां च माधुर्यवत्तया स्वयं प्रयोजनं च भवति: 'श्रवासो अस्य कीरयो जनासः' 'कलौ सङ्कीर्त्यकेशवम्' 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा' इत्यादिकमत्र विभाव्यम् ॥ ६९ ॥

अ ॥ सपर्यैव तव निरपायं साधनमित्याह—

**णत्थि अहिक्कमणासो विच्छेअम्मि वि ण पच्चवाअपसंगो ।**
**सप्पा वि तुह सपज्जा रक्खइ अच्चुअ महत्तरादु भआदो॥७०॥**

छा ॥ नास्त्यभिक्रमनाशो विच्छेदेऽपि न प्रत्यवायप्रसङ्गः ।
स्वल्पापि तव सपर्या रक्षति अच्युत महत्तराद्भयात् ॥

व्या॥ णत्थि इति॥स्वतो निरुपाधिकवत्सलस्य प्रसादावसरलाभेन सफलमनोरथस्य नित्यबन्धोः पूर्णकामस्य सपर्याया उपक्रमस्य सकलसुखनिदानत्वान्नाभिक्रमनाशः,अशक्त्यादिना विच्छेदेऽप्युपक्रममात्रेण भवदनुग्रहसिद्धेः फलेऽपि न व्यभिचार इति स्थिते कथं प्रत्यवायप्रसङ्गोऽपि नाम,अतः चेतनाशक्त्यादिवशादल्पीयस्यपि सा शेषपूरणैकतानेन भवतैव निर्व्यूढा सहतोऽपि संसाररूपाद्भयाद्रक्षति; इतरेषां तु कर्मवशानामपूजनीयत्वात्तदुपक्रम एव नाशाय;आरब्धस्य विरतावुभयतो भ्रंशः; महत्या अपि पूजायाः'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्'इति तत्तदाराध्यानामैश्वर्यस्य सातिशयत्वपरायत्तत्वादिदोषदूषितत्वात्फले विसंवादोऽल्पत्वं वा दुष्परिहरमिति भावः ॥ ७० ॥

अ ॥ पूर्वगाथासूचितमितरेष्वनादरमेव निर्दिशति—

**अपसाए अपसण्णा तुज्झ पसाअम्मि दाससच्च पसण्णा।**
**आरज्झा होन्ति परे किं तेहि पसंगलंभिअपहावेहिं ॥ ७१**

छा ॥ अप्रसादेऽप्रसन्नास्तव प्रसादे दाससत्य प्रसन्नाः ।
आराध्या भवन्ति परे किं तैः प्रसङ्गलम्भितप्रभावैः ॥

व्या ॥ दाससत्य, तव, अप्रसादे चेतनापराधवशात्कालुष्ये सति, (स्वयम्) अप्रसन्नाः प्रभोस्तवानुसरणधियेति भावः ; (त एव) तव, प्रसादे, (स्वयमपि) प्रसन्नाः, अत्राप्युक्त एव हेतुः, परे, देवाः, आराध्याः, भवन्ति; भवत्करुणयेति भावः; (अतः) प्रसङ्गेन भवत्प्रसादाप्रसादप्रसङ्गेन, न तु स्वातन्त्र्येण, लम्भितः प्रभावः आराधननिदानीभूतो महिमा येषां तैः, तैः परमुखप्रेक्षितया स्वतो निग्रहानुग्रहयोरप्रभवद्भिः देवैः, साध्यं किं न किमपि 'ब्रह्मा स्वयंभूश्चतुराननो वा रुद्रस्त्रिनेत्रस्त्रिपुरान्तको वा । इन्द्रो महेन्द्रस्सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम्' इत्यादिकं काकासुरगजेन्द्रादित्राणवृत्तान्तादिकमप्यत्र निध्येयमिति भावः । इदमपरत्राप्याचार्येणानेन 'त्वयि' रक्षति रक्षकैः किमन्यैस्त्वयि चारक्षति रक्षकैः किमन्यैः, इत्यादिना प्रपञ्चितम् ॥ ७१ ॥

अ ॥ मदपेक्षितपूरणे न तेषां शक्तिरिति च ते न मादृशामुपास्याः इत्याह—

**इअरतिअसा पसण्णा किंकरसच्च मह किंणु काहेन्ति हिअं ।**
**णीहारघणसएहिं णहु पूरिज्जइ कहं वि चाअअतिण्हा ॥ ७२ ॥**

छा ॥ इतरत्रिदशाः प्रसन्नाः किंकरसत्य मम किं नु करिष्यन्ति हितम् ।
नीहारघनशतैर्न खलु पूर्यते कथमपि चातकतृष्णा ॥

व्या॥ **इअर** इति ॥ किङ्करसत्य, इतरे भवतोऽन्ये,त्रिदशाः, प्रसन्नाः (अपि) मदीयानुवृत्त्या प्रसादमधिगतवन्तोऽपि, मम इतरसुखविरक्तस्य भवत्परिचर्यैक-साम्राज्यमभिलाषुकस्य, किं कीदृशं, हितं, करिष्यन्ति; साक्षान्मोक्षप्रदाने शक्ति-र्मा भून्नाम, तदङ्गभूतेषु प्रतिबन्धमोचनादिषु च नहि कर्मविवशानां तेषामस्ति शक्तिः, अत्रार्थे दृष्टान्तमुपन्यस्यति—णीहार इत्यादिना । नीहारघनानां तुषारज-लदानां शतैः, चातकस्य मेघैकापनोद्यतृषः पक्षिविशेषस्य, तृष्णा पिपासा, कथ-मपि प्रयत्नापि, नखलु पूर्यते, 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्' 'आब्रह्म-भवनाल्लोकाः पुनरावर्तिनोऽर्जुन' 'ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्स्मृ-ताः । प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्' इत्यादिषु तदुक्तम् । करिष्य-न्तीत्यत्र कृञः 'भविष्यति हिरादिः' इति भविष्यदर्थे हिआदेशे 'आ भूतभवि-ष्यति च कृञः'इति कृञ ऋकारस्य आत्वे बहुवचने न्तिआदेशे च'काहिन्ति' इति सिद्धिः ; तृष्णाशब्दस्य कृपादित्वादृकारस्येकारः ॥ ७२ ॥

अ ॥ कुत एवम् ? अत आह—

**अणुगअसुहमअतिण्हा अच्चुअ वीसमइ तुज्झ मामअतिण्हा ।**
**पवहेसु पसरिआए आसिअपवहन्तघणकिवासरिआए ॥ ७३ ॥**

छा ॥ अनुगतसुखमृगतृष्णाऽच्युत विश्राम्यति तव मामकतृष्णा ।
प्रवाहेषु प्रसृताया आश्रितप्रवहद्घनकृपासरितः ॥

व्या॥ **अणुगअ** इति॥ अच्युत, प्रसृतायाः विष्वक्प्रवृत्तायाः, तव, आश्रितेषु प्रवहन्त्याः घनकृपाया एव सरितः, त्वदाश्रितानां प्रवहद्घनकृपासरित इति वा, प्र-वाहेषु, अनुगता अनुसृता सुखं स्वर्गादिरूपं पारत्रिकं दारागारादिरूपमैहिकं च तदेव मृगतृष्णा, वञ्चनापर्यवसायित्वादेवम्; यां सा, मामिका मदीया,तृष्णा वि-

षयाभिलाषः, विश्राम्यति ; मम भवत्करुणाविषयत्वाद्विद्युद्विलसितानुकारिषु अनर्थहेतुषु जुगुप्साविषयेषु विषयेषु देवतान्तरैरपि भवत्परतन्त्रैर्दातुं शक्येषु नास्त्यभिलाषः; अतो भवानेक एव मे गतिरिति भावः; लौकिकसरित्प्रवाहवशान्मृगतृष्णा तृष्णा च नश्यतीति दृष्टम् । पूर्वार्धे 'मअतिण्हा' इति, उत्तरार्धे 'सरिआ ए' इति च सस्वरव्यञ्जनसमुदायस्य स्थानविशेषनियमेनावृत्तेर्यमकं नाम शब्दालङ्कारः॥

अ ॥ भगवदेकभोगताप्रसङ्गेन अभिलषितस्य तुङ्गतां प्रागुपन्यस्तां संस्मरंस्तत्प्रतिसम्बन्धिनः स्वस्य नीचतामनुसन्धत्ते—

**विअलसअलङ्गविसमे धम्मे णअसच्च धअणिहे धारेन्तो ।**
**कंतारपंथओ विअ खलन्तचलणोम्हि काअरविईरंतो ॥ ७४ ॥**

छा ॥ विकलसकलाङ्गविषमान् धर्मान्नतसत्य ध्वजनिभान् धारयन् ।
कान्तारपान्थक इव स्खलच्चरणोऽस्मि कातरविदीर्यमाणः ॥

व्या ॥ **विअल** इति ॥ नतसत्य, अहं, विकलाङ्गान् सकलाङ्गांश्च विषमान् निम्नोन्नतान्, विकलैः सकलैश्च अङ्गैर्विषमान् वा, ध्वजनिभान् दम्भार्थं क्रियमाणतया कर्तृप्रकाशनैकप्रयोजनान्, धर्मान् अलौकिकश्रेयस्साधनभूतान्, धारयन् कथंचिदवलम्बमानोऽहं, कान्तारे दुर्गमे वर्त्मनि, पथिक इव, कातरः केऽपि विप्रलम्भं ज्ञास्यन्तीति बिभ्यत् श्वापदतस्कराद्युपद्रवसम्भावनया भीरुश्च, विदीर्यमाणः अभिभूयमानः कण्टकादिभिश्छिद्यमानश्च, स्खलच्चरणः स्खलिताचारः स्खलितपादश्च, अस्मि भवामि; निम्नोन्नतध्वजधरः कान्तारगुल्मे प्रविष्टः पान्थो यथा भीतभीतश्छिद्यमानगात्रश्च न स्वैरं चेष्टितुं शक्नोति, तद्वत् साङ्गान् निरङ्गांश्च यथाकथञ्चित् धर्मान् दम्भार्थमनुतिष्ठन् भीतः पराभूतश्च योऽहं स्खलामि ; स कथं भवन्तमभिलषामि—इत्यहो मे निर्मर्यादतेति भावः । यद्यपि 'इकः पथो णस्य' इति इकादेशे 'पहिओ' इत्येव पान्थशब्दस्यापि रूपम्, तथापि बहुलग्रहणानुवृत्तेः पान्थशब्दात्स्वार्थे कप्रत्यये 'पंथओ' इति रूपम् ॥ ७४ ॥

अ ॥ पुनस्तदेवाह—

**ठिरधम्मवम्मथइअं अधम्मपवणाण अगखन्धपउत्तं ।**
**अघडन्तविपडिसारं अच्चुअ मं हससि णूण लच्छिसमक्खं ॥**

छा ॥ स्थिरधर्मवर्मस्थगितमधर्मप्रवणानामग्रस्कन्धप्रवृत्तम् ।
अघटमानविप्रतिसारमच्युत मां हससि नूनं लक्ष्मीसमक्षम् ॥

व्या ॥ **ठिर** इति ॥ अच्युत, स्थिरेण धर्मेणैव वर्मणा कवचेन स्थगितं छन्नगात्रं छन्नदोषञ्च, (तथापि) अधर्मे प्रवणानां प्रह्वानाम् अग्रे अग्रिमे स्कन्धे विभागे प्रवृत्तं व्यापृतं 'स्कन्धस्स्यान्नृपतावंशे साम्परायसमूहयोः । काये तरुप्रकाण्डेच्च भद्रादौ च्छन्दसो भिदि' इति मेदिनी, (एवमपि) अघटमानः असम्भवन् विप्रतिसारः अनुतापः यस्य तं 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमरः, मां, लक्ष्म्याः प्रियमहिष्याः तव मद्ग्रहणमपेक्षमाणायाः, समक्षं प्रत्यक्षे, हससि नूनं कथमयमपि भवत्कृपायाः पात्रमिति परिहससीति सम्भावयामि । नूनमित्यस्य मांसादित्वात् 'लुङ्मांसादौ' इति पाक्षिको बिन्दुलोपः ॥ ७५ ॥

अ ॥ संप्रति मम दोषदूषितत्वमेव भवत्कृपाविषयताया निदानमित्याह—

**तरिउं अच्चुअ दुरिअं इमम्मि देहम्मि एक्कदिअहे वि कअं ।**
**कालो अलं ण सअलो कलुणाए तुज्झ पुण्णपत्तं होमो॥ ७६ ॥**

छा ॥ तरितुमच्युत दुरितमस्मिन् देहे एकदिवसेऽपि कृतम् ।
कालोऽलं न सकलः करुणायास्तव पूर्णपात्रं भवामः ॥

व्या ॥ अच्युत, येषामस्माकमिति शेषः, येषामस्माकम्, अस्मिन् वर्तमाने देहे, एकस्मिन् दिवसे, कृतं, दुरितं पापं, तरितुं नरकानुभवेनातिवाहयितुं, सकलः,(आगामी)कालः, नालं न पर्याप्तः ; दिवसान्तरेषु किमुतातीतजन्मसुचेति भावः; (ते वयं) तव आपन्नबन्धोर्भवतः, करुणायाः कथमितरथा जीवत्वयमिति परिधारणामावहन्त्याः, पूर्णं समग्रलक्षणं पात्रं योग्याः, 'योग्यभाजनयोः पात्रम्' इति कोशः; भवामः; अन्यथानुपपत्त्या रक्षणीया एव मादृशास्तव निरुपाधिकबन्धोरशरण्यशरण्यस्येति हन्त दोषैरपि भूयिष्ठमुपकृतमित्याशयः । 'इमम्मि' इत्यत्र 'ठेर्थस्सिम्मि' इति म्मि इत्यादेशः ॥ ७६ ॥

अ॥प्रतिपादितक्रमेण मद्दोषाणामानन्त्येऽपि भवद्गुणाएव मे शरणमित्याह—

**अच्चुअ तुज्झ गुणाणं मह दोसाणं वि णत्थि कुत्थवि गणणा ।**
**तहवि जओ पुढमाणं अहिअं लीणाण होइ णहु दुब्बल्लं॥ ७७ ॥**

छा ॥ अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापिगणना ।
तथापि जयः प्रथमानामधिकं लीनानां भवति न खलु दौर्बल्यम् ॥

व्या ॥ **अच्चुअ** इति ॥ अच्युत, तव भवतः, गुणानां वात्सल्यसौशील्यादीनां, (तथा) मम दोषाणां क्षणान्तरे कल्पानुभाव्यं दुरितं संपादयतो मम दोषाणां च, कुत्रापि, गणना, नास्ति, अपारत्वान्न कस्यचिदपि गणने शक्तिः ; तथापि मद्दोषाणामसंख्यतया भवद्गुणसाम्येऽपि प्रथमानां पूर्वमुपन्यस्तानां भवद्गुणानामेव, जयः, नेतरेषाम् ; अत्र जयो नाम कार्यकारित्वं विवक्षितम् ; तथाच भवद्गुणानामाश्रितरक्षणेनैव स्वरूपलाभात्तएव कार्यकारिणो भवन्ति ; आश्रयनाशका मद्दोषास्तु कार्यकाले कान्दिशीका एव भवन्तीत्याशयः । एतत्समर्थनाय सामान्यरूपमर्थान्तरं न्यस्यति—अधिकं श्रेयांसं पुमांसं, लीनानां संगतानां, विवक्षातः कारकाणां प्रवृत्त्या आधारस्य कर्मत्वविवक्षया सप्तमीस्थाने द्वितीया; दौर्बल्यम् अकार्यकारित्वलक्षणं, न भवति खलु; अतोऽधिकाश्रयाणां गुणानां जयशीलत्वं स्थाने इति भावः । दौर्बल्यशब्दे यलोपे शेषस्य लस्य रेफलोपे बस्य, च द्वित्वम्; दौ इत्यस्य संयोगे ह्रस्वादेशे अनुक्तन्यायेन 'एच इग्घ्रस्वादेशे' इति औकारस्य उकारः ॥ ७७ ॥

अ ॥ तव रक्षणैकतानतया यथापूर्वमितोऽप्यप्रमादेन रक्षणीयोऽहमिति प्रार्थ्यते—

**रत्तिं दिअहं अच्चुअ खुडिअपडंताइ आउदुमखंडाइं ।**
**दट्ठूण वि दरिअमणं बालं एण्हि वि भरसुमं अपमत्तो ॥ ७८ ॥**

छा ॥ रात्रिं दिवसमच्युत खण्डितपटायमानान्यायुर्द्रुमखण्डानि ।
दृष्ट्वापि दृप्तमनसं बालमिदानीमपि भरस्वमामप्रमत्तः ॥

व्या ॥ **रत्तिं** इति ॥ अच्युत, रात्रिंदिवसं रात्रौ दिवापि, आयुष एव द्रुमस्य घनतया लक्षितस्यापि, खण्डितपटायमानानि गच्छता कालेन निष्कोषितान्यतिक्षुल्लकानि, दृष्ट्वा अवगत्यापि, दृप्तमनसं कथमितः करालमाननमन्तकस्य द्रष्टास्मीति

भिया विकलम्, (अत एव) बालं स्वामर्थानभिज्ञं, भवतोऽपत्यत्वेन रक्षणे प्राप्तमिति वा,अप्रमत्तः आचार्यरूपेण मयैव ग्राहितहिताहितोऽयं स्वानर्थेषु न सजेदिति मयि विस्रम्भेण प्रमादरहितः, भरस्व यथापुरं मद्रक्षणभरं भवत्येवासञ्जय; यद्यहमात्मरक्षणे प्रभवेयं, तर्हि कथं गलत्यप्यायुषि मम दर्पोऽयमिति भावः। दृशेः क्त्वाप्रत्यये 'तुमत्तुआणतूणाः क्त्वः' इति तूणादेशे 'ताद्वो दृशः' इति दृशोऽन्त्यस्य तकारेण सह ठद्वित्वम्; दृप्तशब्दे 'दृप्तेऽरिप्ता' इति पकारतकाराभ्यां सह अरि इति ऋकारस्यादेशः; भृञ्धातोः ऋदन्तत्वादरे लोटि मध्यमैकवचने 'एकस्मिन् प्रथमादेर्विध्यादिषु दु सु मु' इति सु आदेशः॥ ७८॥

अ॥ नहीदं मम प्रार्थनं भवति भरासञ्जनार्थकं विप्लुतं, किन्तु सत्यमेवेति सर्वज्ञो भवानेवात्र साक्षीत्याह—

**णीसाससंकणिज्जे देहे पडलंतसलिलबिंदुसरिच्छे।**
**जाणसि णअसच्च तुमं जरंतकरणे वि दीहजोव्वणतिण्हं॥७९॥**

छा॥ निश्श्वासशङ्कनीये देहे पटलान्तसलिलबिन्दुसदृक्षे।
जानासि नतसत्य त्वं जरत्करणेऽपि दीर्घयौवनतृष्णाम्॥

व्या॥**णीसास** इति॥ नतसत्य,निश्श्वासैः प्रयोजकैः शङ्कनीये शङ्कितव्ये किमयमुपान्त्योऽन्त्य एवेति प्रतिनिश्श्वासं जीवितकालानिश्चयात्सांशयिके, (अत एव) पटलस्य छदिषः अन्ते (स्थितेन) सलिलस्य तोयस्य बिन्दुना कणेन (अस्थिरतया) सदृशे, देहे, जरत्करणे परिणामशिथिलेन्द्रिये सत्यपि, (जीवानां) दीर्घयौवने अक्षय्ये तरुणिमनि सर्वथा दुर्घटतया निश्चितेऽपि तृष्णाम् अभिलाषम्, न परं जीविताशा, अपितु विषयानुभवाशापीति यौवनशब्देन व्यज्यते; त्वमेव, जानासि; नास्ति सर्वविदोऽगोचरे मादृशमन्दविचेष्टितमिति जानन् जिह्मेमीति भावः, ॥ ७९ ॥

अ॥ एवं मद्दोषदर्शनेऽपि निरङ्कुशस्वतन्त्रेण भवता नाहं हातव्य इत्याह—

**अमुणिअ णिअकाअव्वं तिलग्गमुणिएसु मं वि पडिऊलगइं।**
**इअ णिअसहावविलिअं हाउं दासाण सच्च णहु तुह जुत्तं॥८०॥**

छा ॥ अज्ञातनिजकर्तव्यं तिलाग्रज्ञातेषु मामपि प्रतिकूलगतिम् ।
इति निजस्वभावव्रीडितं हातुं दासानां सत्य नखलु तव युक्तम् ॥

व्या॥**अमुणिअ** इति॥दासानां सत्य,अज्ञातनिजकर्तव्यं वर्णाश्रमाद्यनुरोधेन धर्मवैषम्यात् मयानुष्ठेयोऽयमित्यनिर्धारितनिजधर्मं,प्रथमतो धर्मज्ञानं पश्चात्तदाचरणमिति स्थिते मम ज्ञानमेव नास्ति, आचारस्तु दूर इति भावः; अनेन विहितानभिज्ञताप्रयुक्तस्तत्परित्याग उक्तः;इतो निषिद्धानुष्ठानमाह—तिलेति। तिलाग्रपरिमाणाश्च ते ज्ञाताश्चेति पूर्वनिपातनियमाभावात्, ज्ञातेषु तिलाग्रेष्वितिवा; साकल्येनाज्ञानमपि न तथा दोषाय;मां,प्रतिकूला विधिनिषेधविपर्यासवती गतिः आचारः यस्य तम्, इदमेव भवतो दुस्सहं, यत्परमाणुना मया परावरस्य भवतोऽप्याज्ञाभङ्ग इति;इति एवंप्रकारेण निजस्वभावेन कर्तव्यापरिज्ञानज्ञातविरुद्धाचरणप्रवणतारूपेण, व्रीडितं कथमीदृशोऽहं निरुपाधिकस्वामिनः पुरस्तव तिष्ठेयमिति स्वतो लज्जितं, मां स्वतो हिताहितानभिज्ञं प्रकृतिवशगंच, हातुं संप्रति यदृच्छया भवत एवाहं परिग्राह्य इति शरणागतं निराकर्तुं, तव कमलनिलयासहचरस्य रक्षणावसरप्रतीक्षस्य आपन्नवत्सलस्य 'मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन-दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्' 'यदिवा रावणः स्वयम्' इत्यादिवादिनः न युक्तं खलु स्वत उपनतस्य चिरनष्टस्य स्वस्य परित्यागः स्वामिनो हानय इति त्वयापीदं विदितमित्याशयः । जानातेर्मुणादेशः ; कृत्रो भविष्यति आकारः, तव्यश्चेति 'काअव्वं' इति रूपम्; व्रीडितशब्दस्य गभीरादित्वादित् ॥ ८० ॥

अ ॥ ईदृशं त्वां परिगृह्य किं मया विधेयमिति भगवतः शङ्कामुत्प्रेक्ष्याह—

**को ऽहं किं करणिज्जं परिहरणिज्जं वि किंति जाणसि सव्वं ।**
**तीरासि अ तं हिअंमह तिअसेसर कुणसु णिअहिअअणिक्खित्तं॥**

छा ॥ कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम् ।
शक्नोषि च तत् हितं मम त्रिदशेश्वर कुरु निजहृदयनिक्षिप्तम् ॥

व्या॥ **को** इति॥ अहं कः'आर्तो जिज्ञासुः' इत्यदिषु कीदृशोऽधिकारी,?(तथाविधस्य मे) करणीयं कर्तव्यं तादृशफलसिद्धये अनुष्ठेयं च किम् , परिहरणीयं

तादृशाधिकारभ्रंशसंपादकतया त्याज्यं च किम्—इति, सर्वे कृत्स्नशः, जानासि भवानेव मदधिकारं त्याज्यमुपादेयं च सर्वशो वेत्सि ; शक्नोषिच यथाज्ञानं माम् अनुष्ठापयितुमिति शेषः, अहं न तथेति भावः; तत् तवैव मद्धितनिर्वहणे पारीणत्वात्, त्रिदशेश्वर देवानपि सर्वान् पालयतः कियन्मे पालनं नाम भवत इति भावः; हृदये भवतो मनसि, निक्षिप्तम् अस्येदं पथ्यमिति सङ्कल्पितं, मम, हितं पथ्यं, कुरु; इदानीमप्युपेक्षणे मम मद्धितानभिज्ञानात्तदाचरणाशक्तेश्च न कदाचिदपि निस्तार इति हितमप्रतिबोध्य नाहं परिहरणीय इति चाभिप्रायः । 'शकेस्तीरपारचआः' इति शकेस्तीरादेशः ; 'यत्तत्सम्यग्विष्वक्पृथको मल्' इति तच्छब्दान्त्यहलो मादेशे तमिति च रूपम् ।। ८१ ।।

अ ।। सर्वदा सर्वथा च भवदधीनसत्तास्थितिप्रवृत्तिकोऽहमिति परिज्ञाततत्त्वोऽहं नोपेक्षणीय इत्याह—

**एण्हि उवरिं वि इमो गुणगहिओ दारुपुत्तओ व परवसो ।**
**तस्स वि मह तिअसेसर तीसु वि करणेसु होसु सुहसंकप्पो॥**

छा ।। इदानीमुपर्यप्ययं गुणगृहीतो दारुपुत्रक इव परवशः ।
तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुखसङ्कल्पः ।।

व्या ।। **एण्हि** इति॥ त्रिदशेश्वर, अयम् (अहम्), इदानीम् अधुनापि, उपर्यपि आगामिकालेऽपि,त्वया, गुणैः सत्त्वादिभिरेव गुणैः सूत्रैः गृहीतः, दारुमयः पुत्रकः प्रतिमेव,परवशः, यथा नटेन सूत्रे गृहीता प्रतिमा तत्संकल्पमन्तरेण स्पन्दितुमपि न शक्नोति, तद्वत्प्रकृतिगुणैः सत्त्वादिभिः करणैः त्वया गृहीतोऽहं त्वदिच्छानुविधायीति भावः; एवं गृहीतस्यापि मम, त्रिषु करणेषु त्रिविधेष्विन्द्रियेष्वपि, त्रिषु करणेषु नृत्तवादित्रगीतसंबन्धिषु, इदं यथा—'नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम् । संस्थानं ताडनं रोधः करणानि प्रचक्षते' इति राजकन्दर्पः; सुखः सामाजिकसुखावहः सङ्कल्पः यस्य तादृशः, भव ; त्वया गृहीतस्यापि मम त्वदीयायामनुमन्तृत्वदशायामनन्तानर्थप्रवणकरणताया दर्शनात्तावदपि कर्तृत्वं मयि नाधिरोपयेत्याशयः; नटः सूत्रेण प्रतिमां गृहीत्वाऽपि गीतादिकं स्वयमेवावहितः प्रयुङ्क्ते । 'एण्हि एत्ताहे इदानीमः' इतीदानीमित्यस्य 'एण्हि' इति

रूपम् ; उपरिशब्दस्य वक्रादित्वाद्बिन्दुः; त्रिष्वित्यस्य 'दिर्दोत्तोदु ङसौ' इति इ-कारस्य दीर्घे सुपि च 'तीसु' इति सिद्धिः ॥ ८२ ॥

अ ॥ संसृतिक्लेशानां दुर्विषहतां भगवद्विषयस्य महानन्दैकरसतामात्मस्वरूपस्य भगवद्दास्यैकभोगतां च निध्यायोत्कण्ठते—**णिअकम्म** इत्यादिभिः—**इअफुड** इत्यन्तैः अष्टाभिः स्कन्धकैः—

**णिअकम्मणिअलजुअलं अच्चुअ काऊण मह पिआपिअवग्गे ।**
**काहे घोरकलेवरकाराघरकुहरणिग्गअं काहिसि मं ॥ ८३ ॥**

छा ॥ निजकर्मनिगलयुगलमच्युत कृत्वा मम प्रियाप्रियवर्गे ।
कदा घोरकलेवरकारगृहकुहरनिर्गतं करिष्यसि माम् ॥

व्या ॥ **णिअ इति** ॥ अच्युत, निजकर्मणी मयाऽनुष्ठिते साध्वसाधुकर्मणी एव निगले प्रतिबन्धकतया श्रृङ्खले, तयोः युगलं युग्मं, मम, प्रियाप्रियाणां सुहृदां द्वेषिणां च, वर्गे समूहे, कृत्वा विभज्य, 'सुहृदस्साधुकृत्यां द्विषन्तः पापकृत्याम्' इति श्रुतेः; माम् 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुतनिरञ्जनदशापन्नं, घोरात् प्रकृतिसंबन्धावहतयाऽनर्थहेतोः, कलेबरात् प्राकृतदेहादेव, कारागृहस्य बन्धनालयस्य, कुहरात् गर्तात्, निर्गतम् अपास्तसमस्तज्ञानावरणम् आविर्भूतापहतपाप्मत्वादिगुणाष्टकं च, कदा कस्मिन् काले, करिष्यसि ; इदं हि भवदायत्तमिति भावः ; अत्र कारुणिकस्य आचार्यस्य स्वमोचनमात्र एव तात्पर्यात् पुण्यपापयोराप्तानाप्तेषु विभागे प्रार्थनाविरहात् मोचनांश एव विधेयत्वम्; इतरांशस्य शास्त्रेषु दृष्टस्य अनपोद्यस्य अनुवादमात्रत्वमिति च विभाव्यम् ; न च 'तुल्यो मित्रारिपक्षयोः' इति निदर्शितां समतामासादितवतः तादृशस्याधिकारिणोऽपि कथं पक्षद्वयसंभावनेति शङ्कनीयम्, अप्रियशब्दस्य 'द्विषन्तः पापकृत्याम्' इत्याम्नायवचनैकार्थ्याय स्वतो द्विषतामेव परिग्रहादुदासीनेष्वपि ब्रह्मैकतानेषु पापाचारपरा एव अप्रियपदेन अभिधीयन्ते ; तथा स्वतस्सुचरितपरिपाकवशात्स्निह्यन्तस्सुहृत्प्रियादिपदबोध्या इति न कोऽपि विरोधः । किंशब्दान्ङौ कालविषये 'डरिआ डाहे डाला काले' इति डाहे आदेशः॥८३॥

**हद्दे तुमम्मि कइआ वीसमिअं बम्हधमणिमग्गणिहिंतं।**
**दिणअरदिण्णग्गअरं अच्चुअ दच्छिहिसि दइअडिंभं विअ मं॥८४॥**

छा ॥ हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमनीमार्गगमिष्यन्तम् ।
दिनकरदत्ताग्रकरमच्युत द्रक्ष्यसि दयितडिम्भमिव माम् ॥

व्या ॥ **हद्दे** इति ॥ अच्युत, हार्दे अन्तः प्रविश्य शासनाय सत्तासंजननाय च हृदयमधिशयाने, त्वयि, विश्रान्तं त्वदाश्रयेण संसृतिक्लेशमपनुदन्तं, ब्रह्मधमनी-मार्गेण गमिष्यन्तं ‘ शतं चैकाच हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ’ इत्युक्तशताधिकनाडीमार्गेण प्रस्थितम् , (अथ) दिनकरेण सवित्रा देवयाने प्राथमिकेन, दत्ताः वितीर्णाः अग्रकराः किरणाञ्चलानि लघूत्थानाय यस्मै तं, मां, दयितं प्रियं, डिम्भं बालमिव वात्सल्यकारुण्यादिभरितः सतृष्णश्च, कदा, द्रक्ष्यसि; डिम्भोऽपि पितुर्हृदये शयितः मार्गे समागतः कञ्चुकिप्रभृतिभिः पितुः परिजनैरुपानीतः सतृष्णमवलोक्यते । किंशब्दात् ङौ इआ आदेशे कइआ इतिः गमेर्णि इत्यादेशे भविष्यदर्थे हौ च णिहिन्तं इति;‘डच्छ दृशिगम इजादौ हिलुक् च वा’ इति दृशेर्भविष्यदादेशेषु इ इत्यादिषु परेषु डित् अच्छादेशः ; वैभाषिकत्वान्न हेर्लुक् ; ‘ सिप्थास्से सि’ इति थासः सि इत्यादेशश्च ॥ ८४ ॥

**काहे अमाणवन्ता अग्गिमुहा आइवाहिआ तुह पुरिसा ।**
**अइलङ्घिहिअन्ति मिमं अच्चुअ तमगहणतिउणमरुकंतारं ॥ ८५॥**

छा ॥ कदा अमानवान्ता अग्निमुखा आतिवाहिकास्तव पुरुषाः ।
अतिलङ्घयिष्यन्ति मामच्युत तमोगहनत्रिगुणमरुकान्तारम् ॥

व्या ॥ **काहे** इति ॥ अच्युत, कदा, अमानवान्ताः अमानवसंज्ञितपुरुषावसानाः, अग्निमुखाः अग्निप्रभृतयः, आतिवाहिकाः मुक्तपुरुषातिवहनप्रयोजनाः, तव पुरुषाः त्वयाऽधिकारिताः, तमसा भवद्विषयावरणेन अज्ञानेन गहनं दुष्प्रवेशं त्रयः गुणाः सत्त्वरजस्तमांसि यस्य तत् प्रधानमेव मरुकान्तारं, माम् , अतिलङ्घयिष्यन्ति ; ‘अर्चिषमभिसम्भवन्ति अर्चिषोऽहः’ ‘ अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम्’ ‘अमानवं समासाद्य’ इत्यादिकमत्र भाव्यम् ॥ ८५ ॥

**लंघिअविरआसरिअं लंभिअसइसुद्धसत्तमअसोम्मतणुं ।**
**कअबम्हालंकारं काहिसि णअसच्च किंकरं काहे मं ॥ ८६ ॥**

छा ॥ लङ्घितविरजासरितं लम्भितसदाशुद्धसत्त्वमयसौम्यतनुम् ।

कृतब्रह्मालङ्कारं करिष्यसि नतसत्य किङ्करं कदा माम् ॥

व्या ॥ **लंघिअ** इति ॥ नतसत्य, मां, कदा, लङ्घिता विरजा रजसः पारे वर्तमानतया तथाऽऽख्याता सरित् येन तं, लम्भिता प्रापिता सदा शुद्धं सतताऽसंस्पृष्टरजस्तमस्कं यत् सत्त्वं मिश्रसत्त्वविलक्षणं तन्मयी तद्विकारभूता सौम्या अनुद्वेगदायिनी तनुः येन तं, कृतः ब्रह्मालङ्कारः ब्रह्मोपसदनार्हः अप्राकृतः अलङ्कारः मण्डनं यस्य तं, (तव किङ्करं भृत्यं च, करिष्यसि । 'ततस्तु विरजातीरप्रदेशं' 'स आगच्छति विरजां नदीं' 'तं पञ्च शतान्यप्सरसां प्रतिधावन्ति' 'ब्रह्मालङ्कारेण' 'ब्रह्मालङ्क्रिया' इत्यादिकं भाव्यम् ॥ ८६ ॥

**संसारसाअराओ उक्खित्तं तिअसणाह फुरिआलोअं ।**
**काहे काहिसि हिअए कोत्थुहमणिद्प्पणं व लच्छिपुलइअं॥८७**

छा ॥ संसारसागरादुत्क्षिप्तं त्रिदशनाथ स्फुरितालोकम् ।

कदा करिष्यसि हृदये कौस्तुभमणिदर्पणमिव लक्ष्मीदृष्टम् ॥

व्या ॥ **संसार** इति ॥ त्रिदशनाथ, संसारादेव सागरात् उपयोगप्रकाशाद्यभावहेतोः दुरुत्तराच्च, उत्क्षिप्तं यत्नेन अनुभवसम्पादनाय समुद्धृतम्, (अत एव) स्फुरितः प्रकाशीभूतः आलोकः अर्थपञ्चकज्ञानं तेजश्च यस्य तं, लक्ष्म्या करुणारूपया श्रिया देव्या दृष्टम् अङ्गीकारानुमतिदायिभिः कटाक्षैः सम्भावितं निजाभिरूप्यनिर्वर्णनाय वीक्षितं च, मां, कौस्तुभाख्यं मणिदर्पणमिव, हृदये वात्सल्येन क्रोडे, भूषणतयोरसि कौस्तुभं किल वहति : करिष्यसि ; मुक्तं भगवानालिङ्गतीतीदम् । 'दृशिरोअच्छ' इत्यादिना दृशेः पुलआदेशः ॥ ८७ ॥

**काहे तुह पअपउमे होहिमि णअसच्च केलिकंततिहुवणे ।**
**मअणरिउमउडमंडणसुरसरिआसोत्तसूइअमहुप्पवहे ॥ ८८ ॥**

छा ॥ कदा तव पदपद्मे भविष्यामि नतसत्य केलिक्रान्तत्रिभुवने ।

मदनरिपुमकुटमण्डनसुरसरित्स्रोतस्सूचितमधुप्रवाहे ॥

व्या ॥ **काहे** इति ॥ नतसत्य, केल्या न तु प्रयासेन क्रान्तम् आक्रान्तं त्रिभुवनं भुवनत्रितयं येन तस्मिन्, मदनरिपुमकुटस्य शङ्करकिरीटस्य मण्डनं यत् सुरसरित्स्रोतः गङ्गाप्रवाहः अलकनन्देति यावत्, तया सूचितः मधुनः पद्मदशानु-

रूपस्य मकरन्दस्य प्रवाहः यस्य तस्मिन्, तव, पदपद्मे, कदा, भविष्यामि; कदा भवत्पादपतनेन कृतार्थो भविष्यामीति भावः; भुवः हो आदेशे भविष्यति हौ मिपो मिआदेशः ॥ ८८ ॥

**उवणिसआसिरकुसुमं उत्तंसेऊण तुह पअंबुअजुअलं ।**
**दइओ होहिमि कइआ दासो दासाण सच्च सूरिसरिच्छो॥ ८९॥**

छा ॥ उपनिषच्छिरःकुसुममुत्तंसयित्वा तव पदाम्बुजयुगलम् ।
दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः ॥

व्या ॥ **उवणिसआ** इति ॥ दासानां सत्य, उपनिषदामेव (पुरन्ध्रीणां) शिरसि स्थितं बहुमानेन वेदान्तप्रतिपाद्यं शिरस्यारोपितं कुसुमं पेशलं सुगन्धि सुन्दरं च, तव, पदाम्बुजयोः युगलम्, उत्तंसयित्वा, परिणामोऽयमलङ्कारः, भगवत्पदपद्मतापत्त्यैव अम्बुजस्यैतच्छिरोधार्यत्वात्, 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति तल्लक्षणम्; सूरिभिः नित्यनिर्धूतसंसारवासनैः शेषशेषाशनादिभिः सदृक्षः मुषिताविर्भूतसहजदास्योऽप्यस इव, दासः, दयितश्च, कदा, भविष्यामि; उत्तंसयित्वा भविष्यामीत्यनेन अद्यतनी सत्तैव पारिभाषिकीति भावः, 'बभूव हृष्टा वैदेही' इत्यादिवत्; आविर्भूतस्वभावस्य नित्यमतिरोहितस्वभावस्य च दासत्वाविशेषात् युक्तैव स्वामिनस्ते तुल्या प्रीतिरिति भावः । उत्तंसशब्दात् त्त्वाप्रत्यये तस्य तूणादेशे तलोपे 'एच्च क्त्वातुंतव्यभविष्यति' इत्येकारः ॥ ८९॥

**अउणोणिउत्तिजोग्गं ओआरविहारसहअरत्तणधणिअं ।**
**अप्पसमभोअमेत्तं अणुहोहिसि देअणाह काहे णु ममं ॥ ९० ॥**

छा ॥ अपुनर्निवृत्तियोग्यमवतारविहारसहचरत्वधन्यम् ।
आत्मसमभोगमात्रमनुभविष्यसि देवनाथ कदानु माम् ॥

व्या ॥ **अउणो** इति ॥ देवनाथ, पुनर्निवृत्तिः स्वर्गादिषु दृष्टा नियतकालावसानसिद्धा, तस्या अयोग्यम् अनर्हम् अक्षय्यानन्दमभिप्रपन्नम्, अपुनर्निवृत्तौ पुनरावृत्त्यभावे योग्यम् अर्हं, पुनर्निवृत्तौ योग्या अभ्यासः नास्ति यस्य तमिति वा, कर्मकृतप्रत्यावृत्तिविधुरमिति वक्ष्यमाणार्थानुसारी निर्णयः; अवताररूपाः ये विहाराः सङ्कल्पमात्रेण विश्वं पालयतो लीलामात्ररूपाः रामकृष्णादिदशापत्तिसधर्माणो भाविनः 'सम्भवामि युगेयुगे' 'तदाऽऽत्मानं सृजाम्यहम्' इति प्रतिज्ञानात्;

तेषु सहचरतीति सहचरः, सुपस्सुपा समासः; तद्भावेन विशेषप्रणयप्रेरितसहयाना-देशविषयत्वकृतेन धन्यं, स्वामिप्रणयो हि दासस्य धनमिति भावः; 'येनयेन धाता गच्छति तेनतेन सह गच्छति' 'सर्वेषु लोकेषु कामचारो भवति' 'कामान्नी काम-रूप्यनुसञ्चरन्' इति श्रुतेः ; आत्मसमं सर्वशेषिणस्तव भोगसदृशं भोगमात्रम् आनन्दमात्रं 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' 'भोगमात्रसाम्यलिङ्गाच्च' इति सूत्राभ्यां भगवता बादरायणेनैवं विचारितमिदम् ;मां, कदानु, अनुभविष्य-सि, मम त्वत्कारितकैङ्कर्यकरणे प्रतिसम्बन्धीभविष्यसि। 'त्वोदवापोताः'इत्यवेत्युप-सर्गस्य वैभाषिक ओआदेशः ॥ ९० ॥

अ ॥ एवं महाफलानुभवाभिनिवेशिनं तदुचिताचरणविमुखं कथमहमनुभ-विष्यामीति भगवतः प्रतिवचनं संभाव्य प्रतिसमाधत्ते—

**इअ फुडमणोरहं मं एआरिसवअणमेत्तसारं वसअं ।**
**कुणसु णिअगुणगणेहिं सच्चं दासाण सच्च सइ सच्छंदो ॥ ९१ ॥**

छा ॥ इति स्फुटमनोरथं मामेतादृशवचनमात्रसारं वशगम् ।
कुरुष्व निजगुणगणैस्सत्यं दासानां सत्य सदा स्वच्छन्दः ॥

व्या ॥ इअ इति ॥ दासानां सत्य, इति वर्णितप्रकारैः, स्फुटाः प्रकटीभूताः मनोरथाः भवदनुभवविषयाः यस्य तम् , एतादृशानि यानि वचनानि तन्मात्रसारं तदतिरिक्तोपायपरिग्रहादिषु विमुखम् , (अथापि) वशगं स्वाधीनत्रिविधचेतनाचे-तनस्वरूपस्थितिप्रवृत्तिभेदे भवत्यायतमानं,मां सदा, स्वच्छन्दः स्वतन्त्रस्त्वं, गुणानां भवदीयानां वात्सल्यसौशील्यादीनां गणैः स्तोमैः, सत्यं सत्यवाचं, कुरुष्व ; वा-ङ्मात्रेण सूचितमनोरथमपि यदि मां दयादिगुणगणपराधीनो भवानवितथमनोरथ-यति, तर्हि कस्ते निषेद्धेति भावः। 'इतौ तोऽवाक्यादौ' इति इतेस्तकारसंबन्धिन इकारस्य अकारः ॥ ९१ ॥

अ ॥ अनर्हस्य चिरपरित्यक्तस्वपरस्वरूपादिविवेकस्य संभृतापराधस्य ममेदं प्रार्थनमपि महापराधपद इति भवतः क्षमैवात्र मे शरणमित्याह—

**बालप्पवओव्व तरलो मारुइजाइत्ति साअरं तरिउमणो ।**
**पत्थेमि तुमं अच्चुअ कंखिअपअपउम खमसु मह कावेअं॥ ९२॥**

छा ॥ बालप्लवग इव तरलो मारुतिजातिरिति सागरं तरितुमनाः ।
प्रार्थये त्वामच्युत काङ्क्षितपदपद्म क्षमस्व मम कापेयम् ॥

व्या ॥ **बाल** इति ॥ अच्युत, मारुतेः लीलालङ्घितमहार्णवस्य जातिरिव जातिः अवयवसंनिवेशसौसादृश्यं यस्य तादृशोऽहमिति अनयैवार्हन्त्या, सागरं पारावारं, तरितुमनाः उल्लिलङ्घयिषुः, बालः शिशुत्वप्रयुक्तविवेकाभाववान्, प्लवगः जातिप्रयुक्तचापलशाली च यथा, तरलः अधीरः, (अहं) त्वां भवदेकभोगैरपास्तसमस्तप्रतिबन्धककर्माशयैर्मुमुक्षुभिरवाप्यं, प्रार्थये पूर्वाचार्यसादृश्यारोपेण याचे; (अतः) काङ्क्षितम् अविशेषेण सर्वापेक्षितं पदपद्मं यस्य तादृश ; संबुद्ध्याऽनया—कस्य श्रेयसि नाभिलाषः, अतो विषयस्यायं दोष इति ध्वनति ; मम अविषयप्रार्थनालघोः, कापेयं कपित्वं चापलमिति यावत्, क्षमस्व मर्षय ॥ ९२ ॥

अ ॥ मम भवत्प्राप्तिविषये मनोरथे यद्यपि नास्त्यार्हन्ती, तथापि अनिदंप्रथमात्सम्बन्धविशेषाद्वत्सलतया च भवार्णवे निमग्नं दिङ्मोहक्षोभदीनं समुपस्थितमहानर्थं मामुद्धृत्य मे हितमातुरजननीनयेन सेवतामिति प्रार्थयते—

**अच्चुअ विसअक्कंतं भवण्णवावट्टभमिणिउड्डिज्जंतं ।**
**जणणी थणंधअं विअ मं उद्धरिऊण सेवसु सअं पच्छं॥ ९३ ॥**

छा ॥ अच्चुत विषयाक्रान्तं भवार्णवावर्तभ्रमिमज्जन्तं ।
जननी स्तनंधयमिव मामुद्धृत्य सेवस्व स्वयं पथ्यम् ॥

व्या ॥ **अच्चुअ** इति ॥ अच्युत, विषयैः शब्दादिभिः आक्रान्तम् एकमनेकैस्सुदुर्जयैर्वशीकृतं, भवार्णवावर्तस्य भ्रम्याम् अविद्यायां मज्जन्तं विविच्य ग्रहीतुमशक्यदशामापद्यमानम्, अनेनेतः क्षणमप्युपेक्षणे महान् प्रमाद इति सूच्यते; वर्तमानप्रत्ययेन ग्रहणे सौकर्यमुच्यते; माम्, स्तनंधयं स्वतः 'कण्डूयनेऽपि चाशक्तः परिवर्तेऽप्यनीश्वरः' इति दर्शितं स्वरक्षणेऽत्यन्तमशक्तत्वं तदेकजीवनत्वं च ध्वन्यते;जननीव तादृशदशायामपि वत्सला तद्रक्षणे स्वतः प्राप्ता तदुपायवेदिनी च मातेव उद्धृत्य सरभसं बहिरानीय,पथ्यं हिततमं,स्वयं शिशोरनधिकारात् आत्मनैव सेवस्व,आवर्तशब्दे 'तस्याधूर्तादौ टः'इति टः; 'मस्जेराउड्डणिउडुबुड्डखुप्पाः' इति मस्जेः णिउड्डादेशः ॥ ९३ ॥

अ ॥ पथ्यसेवनप्रस्तावादितः परमवधातव्यानि कानिचिदुपन्यस्यति—कम्मम-अ इत्यदिना- णिच्चं इत्यन्तेन—

**कम्ममअघम्मतविअं सुहमअतिण्हाहि कारइअतिण्हाअं ।**
**कारेसु णिव्वुअं मं करआसिसिरेहि अच्चुअ कडक्खेहिं॥९४॥**

छा ॥ कर्ममयघर्मतापितं सुखमृगतृष्णाभिः कारिततृष्णाकम् ।
कारय निर्वृतं मां करकाशिशिरैरच्युत कटाक्षैः ॥

व्या ॥**कम्ममअ** इति॥ अच्चुत, कर्ममयेन घर्मेण आधिभौतिकादितापमाबध्नता तापितं चिरस्य जातसंतापं ,सुखैः विपयसङ्गजनितानन्दैरेव मृगतृष्णाभिः कारिता संपादिता तृष्णा लोभः पिपासा च यस्य तं, मां, करकाशिशिरैः वर्षोपलवच्छीतलैः 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च। द्वयोर्वर्षोपले' इति-मेदिनी; कटाक्षैः अर्थात्तवापाङ्गालोकैः, निर्वृतं परिहृतप्रागुक्तव्यथं; कारय भवत्कटाक्षस्य नासाध्यं किमपीति भवन्निग्रहकार्यभूतोऽयं तापो भवदनुग्रहेणैवापनोद्य इति च भावः। घञन्तात्तापशब्दात्कृतवैभाषिकह्रस्वादेशात् इतचि 'तविअं' इति रूपम्; कृञो णिजन्तात् क्ते 'कारइअ' इति ॥ ९४ ॥

**तुह चिंतणविमुहाणं दिट्ठिविसाणं व दंसणाउ मुअन्तो ।**
**अमअमुहाणं विअ मं अच्चुअ भत्ताण णेसु णअणूसारं ॥ ९५ ॥**

छा ॥ तव चिन्तनविमुखानां दृष्टिविषाणामिव दर्शनान्मुञ्चन् ।
अमृतमुखानामिव मामच्युत भक्तानां नयस्व नयनासारम् ॥

व्या ॥ **तुह** इति ॥ अच्युत, तव, चिन्तने विमुखानाम् आगर्भदुर्भगाणां, दृष्टौ विषं येषां तेषामिव स्थितानां, भुजगेषु केचित् दृष्टिमात्राद्विषं संक्रामयन्तीति भारते; भगवद्विमुखाश्च दर्शनमात्रेण निजं पापमितरत्रापादयन्तीति भावः; दर्शनात्—तद्विषयं मम दर्शनम्, तदपि तत्सान्निध्ये हेतुस्स्यादिति भावः; तत्कर्तृकं मद्विषयकं तु कैमुत्येन निवार्यते; मां, मुञ्चन् परिहरन्, अमृतं संजीवनौषधिः मुखे येषां तेषामिव स्थितानां, भक्तानां तव भक्तानां, नयनयोरासारं तापनिर्वापकं, नयस्व; एवं मदनुपालनं तव दासलाभे हेतुरिति तवैव फलभाक्त्वमित्याकूतम् । आसारशब्दे आकारस्य 'आसारे तु' इत्यूकारादेशः ॥ ९५ ॥

**विसमिलिअमहुणिहेसु अ तणपडिमेसुअ पडिग्गहेसु पलुठिअं।**
**अमअणिहिम्मि व्व अच्चुअ ठावेसु तुमम्मि णिम्ममं मम हिअअं॥**

छा ॥ विषमिलितमधुनिभेषु च तृणप्रतिमेषु च प्रतिग्रहेषु प्रलुठितम् ।
अमृतनिधाविवाच्युत स्थापय त्वयि निर्ममं मम हृदयम् ॥

**विस** इति ॥ अच्युत, प्रमुखमधुरतया पश्चात्तापनिदानतया च गरलसंसृष्टमधुसमानेषु निस्सारतया तृणप्रायेषु च, प्रतिग्रहेषु, कदा वा कः किं दास्यतीति सततधृतरणरणकं मम मनः ममकारकलङ्करहितं विधाय, सदा महानन्दोदन्वति भवति, स्थापय; इदमेव मे प्राप्त निरतिशयसुखोदर्कं तदात्वे सुखरूपं च ॥ ९६ ॥

**णिच्चं इमम्मि किवणे णिक्खिवसु णमंतसच्च णिहिसारिच्छे ।**
**पवहन्तणहपहाझरपसमिअपणमन्तसंजरे तुह चलणे ॥ ९७ ॥**

छा ॥ नित्यमस्मिन् कृपणे निक्षिप नमत्सत्य निधिसदृक्षौ ।
प्रवहन्नखप्रभाझरप्रशमितप्रणमत्सज्वरौ तव चरणौ ॥

व्या ॥ **णिच्चं** इति ॥ नमत्सत्य, कृपणे दीने, अस्मिन् मयीति यावत्, निधिना सदृक्षौ सततोपभोगेऽपि अक्षयसुखदायिनौ, प्रवहता प्रसरता नखप्रभाणां झरेण प्रशमितः सकारणं सवासनं चापास्तः प्रणमतां प्रह्वीभवतां प्रपन्नानां संज्वरः अभितापः याभ्यां तौ, तव निरुपाधिकसकलशेषिणः, चरणौ अन्योन्योपमेयौ पादौ, नित्यं सततमपि, निक्षिप ; क्षणमुद्धरणेऽपि कलिप्रवेशभयादित्थम् । कृपणशब्दस्य कृपादित्वाद्दत इत्वम् ॥ ९७ ॥

अ ॥ नेदमपूर्वं किमपि मया प्रार्थ्यते, येनेदमुपेक्षणीयं च जायेत ; अपि तु प्रतिज्ञातचर एवायं विषयः प्रतिज्ञानिर्वहणव्रतरक्षणदीक्षितेन भवता नान्यथा विधेय इति प्रार्थितमंशं द्रढयति—

**सरणागओत्ति जणिए जणवाए वि जइ अच्चुअ ण रक्खसि मं।**
**होज्ज खु साअरघोसो साअरपुलिणम्मि तारिसं तुह वअणं ॥**

छा ॥ शरणागत इति जनिते जनवादेऽपि यद्यच्युत न रक्षसि माम् ।
भवेत्खलु सागरघोषः सागरपुलिने तादृशं तव वचनम् ॥

व्या ॥ **सरणागओ** इति॥ अच्युत, (अयं) शरणागत इति मद्विषये जनानां वादे सल्लापे जनिते कैरपि उदञ्चिते सत्यपि त्वं यदि मां न रक्षसि अशरणागते

ऽपि मयि तादृशदुरुपशमप्रवादविषयतामात्रावलम्बनेनापि न पालयसि चेत्; सागरस्य पुलिने, तादृशं 'मित्रभावेन संप्राप्तं न त्यजेयं कथं चन । दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम्' 'विभीषणो वा सुग्रीव यदि वा रावणः स्वयम्' 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इत्यादिकं शत्रुमित्रादिनैरपेक्ष्येण शरणागतिव्याजमात्रेण सर्वरक्षणव्रतप्रख्यापकं समोदीरितं, तव निरुपाधिकबन्धोरापन्नवत्सलस्य 'अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन' 'रामो द्विर्नाभिभाषते' इति स्वपरवचनप्रख्यातसत्यभाषणश्रद्धेयस्य, सन्धावचनं, सागरस्य तदा सन्निहितस्य घोष इव ध्वनिमात्रशेषं भवेत् खलु; क इदं श्रद्दधीत भवान् शरणागतान् रक्षतीतीति भावः । भृधातोः 'लङ्लृटोश्च जर्जरौ' इति विधौ जरादेशे रित्त्वात् द्वित्वे 'होज्ज' इति रूपम् ॥ ९८ ॥

अ ॥ कथं त्वं शरणागतः, जनवादमात्रस्य तत्समर्थनायोगात् ; अतस्त्वदरक्षणं न मे व्रतभङ्गकलङ्कायेति शङ्कापरिहारव्याजेन आचार्यरूपचरमपर्वनिष्ठां प्रकाशयन्नुपसंहरति द्वाभ्याम्—

**णिक्खित्तोह्मि अ अगई णिउणेहि तुमम्मि णाह कारुणिएहिं ।**
**ते तुह दट्ठूण पिए णिहुअं णअसच्च भरसु अप्पाण भरं ॥ ९९ ॥**

छा ॥ निक्षिप्तोऽस्मि चागतिः निपुणैस्त्वयि नाथ कारुणिकैः ।
तांस्तव दृष्ट्वा प्रियान् निभृतं नतसत्य भरस्वात्मनो भरम् ॥

व्या ॥ **णिक्खित्तो** इति ॥ नाथ—न जात्वपि स्वामिनं रक्षणाधिकारः परित्यजतीति, अरक्षणे स्वामिन एव हानिः न पुनः स्वस्येति चाकूतम्; अगतिः भवन्तमन्तरेणोपायविधुरः, अहं, कारुणिकैः 'कृपया निस्स्पृहो वदेत्' इत्युक्ताचार्यत्वनिर्वाहकजीवकारुण्यपरायणैः, निपुणैः भवत्प्रपत्त्या भवन्मायामतिलङ्घितुमति लङ्घयितुं च प्रवीणैः, अस्येदमेव युक्तं कथमितरथाऽस्य संसारोत्तरणं भवतु सुकरमिति जानद्भिश्च,त्वयि सत्यसन्धे तैर्वशीकृते च भवति. निक्षिप्तः तदैव समर्पितभरः, अस्मि ; ''तवभरोहमकारिषि धार्मिकैः'' इतीदमत्र स्मार्यते 'मां मदीयं च निखिलं चेतनाचेतनात्मकम्' इति न्यस्तभरैः तदीयोऽहमपि समर्पितः तान् न्यस्तात्मात्मीयभरान्'क्षणेऽपि ते यद्विरहोऽतिदुस्सहः' 'आत्मैव मे मतम्' 'मयि ते तेषु चाप्यहम्' 'स महात्मा सुदुर्लभः' इति प्रशस्तान्, तव, प्रियान्, दृष्ट्वा

एतत्परित्यागे तत्प्रणयोपेक्षणं सिद्ध्यतीति विमृश्य, निभृतं मद्दोषानुशीलनाद्विरम्य, मद्दोषाणां भवदुपेक्षाकार्यत्वानतिवृत्त्या भवद्दोषत्वापत्तेरपरिहार्यत्वात्; आत्मनः तवैव, भरं; मामिति शेषः, भरस्व अविलम्बेन रक्ष ॥ ९९ ॥

**णअसच्च पक्कणाणिअगालिअचिलाअभमणिअकुमारं व णिवो ।**

**होज्जन्तजोव्वणवहुं वरो व मं लहसु मंतिअणविण्णविअं ॥१००॥**

छा ॥ नतसत्य पक्कणानीतगलितकिरातभ्रमनिजकुमारमिव नृपः ।

भविष्यद्यौवनवधूं वर इव मां लभस्व मन्त्रिजनविज्ञापितम् ॥

व्या ॥ **णअसच्च** इति ॥ नतसत्य, पक्कणात् शबरालयात् आनीतं राजकुमारोऽयं न शबरदारकः इति परिज्ञानेनोपायनीकृतं,गलितः किरातोऽहमित्याकारकः भ्रमः अन्यथाज्ञानं यस्य तं च, निजकुमारम् आत्मनः शरीरभूतं स्वभोगसायुज्यार्हं च तनयमिव, अनेनोपमानेन चेतनानां भगवदनन्यार्हशेषत्वादिसाम्राज्यमेव स्वाभाविकम्, अनादिविपरीतज्ञाननिबन्धनस्तु संसार इति दर्शितम्; वरः जामाता, भविष्यद्यौवनां स्वपरिग्रहकालेऽनतीतकुमारभावामनुपभोगक्षमामपि आविर्भविष्यद्यौवनदृष्ट्येव, मन्त्रिजनेन आचार्यलोकेन, मन्त्रपदस्याष्टाक्षरपरतया मन्त्राधीनभवदनुवृत्तिपरत्वात्तेऽपि भवताऽनुपाल्या इति लभ्यते; अमात्यजनेनेति राजपक्षे, विज्ञापितं परिग्राह्योऽयमिति निवेदितं, तद्विज्ञापनसार्थनं मुख्यं तव फलम्, चिरनष्टदासजनलाभश्चानुषङ्गिक इत्याशयः; माम् इदानीमनिवृत्तप्रकृतिसंबन्धमपि तत्कृपापात्रतयाऽनुवृत्तयोग्यतासम्भावनं, लभस्व लाभोऽयं तव । आनीतपदस्य गभीरादिषु दर्शनात् इदादेशः; किरातपदे कस्य ' छागशृङ्खलकिराते लकचाः ' इति चकारः ॥ १०० ॥

अ ॥ एवं समर्पितस्यास्य प्रबन्धस्य प्रबन्धवैलक्षण्यात् विषयवैलक्षण्याच्च फलप्रदानदक्षताद्वारा सात्त्विकपरिग्रहप्रार्थनारूपमङ्गलमाशासानो निगमयति—

**इअ कइतक्किअकेसरिवेअन्ताअरिअवेङ्कडेसविरइअं ।**

**सुहअं अच्चुअसअअं सहिअअहिअएसु सोहउ समग्गगुणं ॥**

छा ॥ इति कवितार्किककेसरिवेदान्ताचार्यवेङ्कटेशविरचितम् ।
सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥

व्या ॥ इअ इति ॥ इति उक्तरीत्या, कविः लोकातिशायिवर्णनाचणः क्रान्तदर्शी वा, स चासौ तार्किकः तर्केण लिङ्गज्ञलिङ्गिज्ञानरूपेण ऊहेन न्यायेनेति यावत्, दीव्यतीति तार्किकः, इति विशेषणस्य विशेष्यत्वविवक्षया नीललोहितादिवत्समासः, स केसरीव, श्रेष्ठः कविः तार्किकश्चेति लभ्यते; तदुक्तं 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इति; तच्च यथाक्रमं रसैकतानकवितोल्लासनसामर्थ्यम् अबाधितार्थनिर्णयलब्धवर्णत्वं च भवति; अनेन तत्कृतीनां सरसत्वमाततमत्वं च फलितम्; इयं च समाख्या डिण्डिमकविविजयसमयसमर्पितेति 'अगणि सदसि सद्भिर्यस्समस्यासहस्रीकविकथकमृगेन्द्रः' इत्यनेन ज्ञायते; तादृशः, वेदान्तानाम् उपनिषदाम् आचार्यः समुच्चेता उपदेष्टा अनुष्ठाता च, 'आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि । स्वयमाचरते यस्तु स आचार्यः' इति वचनात्; इदं बिरुदं श्रीरङ्गनाथेन भगवता प्रसादितमिति 'स्वस्ति श्रीरङ्गभर्तुः किमपि दधदहं शासनं...विश्वस्मिन्नामरूपाण्यनुविहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञामवहितबहुवित्सार्थमन्वर्थयामि' इत्यादिना ऽवसीयते; तादृशेन, वेङ्कटेशेन श्रीवेङ्कटनाथावतारदिने ऽवतीर्णत्वात् तद्घण्टांशत्वाच्च अस्याचार्यस्याभिधानम्; इदं 'नभस्यमासि श्रोणायामवतीर्णाय' 'उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घण्टा हरेस्समजनिष्ट यदात्मनेति' इत्यादिषु स्फुटम्; तेन विरचितं विशिष्य निखिलत्रय्यन्तसारोद्धारेण प्रणीतं, समग्राः समूढा गुणाः श्लेषप्रसादप्रभृतयः पदवाक्यपदार्थवाक्यार्थगताः चारुताहेतवो ऽपृथक्सिद्धा धर्माः भगवत्करुणोन्मेषणद्वारा तत्तदभिमतपुरुषार्थसाधकत्वादयश्च 'काव्यं यशसे ऽर्थकृते' इत्यादिना निरूपिता यस्मिन् तत्, अन्यत्र धारणोपयोगितया दृढसूत्रे ग्रथितं, सुभगम् आशंसनीयं पाठमात्रे ऽपि हृदयग्राहि रुचिरं च, अनेन सुखसेव्यत्वं प्रबन्धस्य सिद्धम्; अच्युतस्य गुणतः स्वरूपतश्च बृहत्त्वेन शारीरकशास्त्रविद्भिर्भावितस्य परावरस्य पुंसः, षष्ठीयं संबन्धमात्रबोधिन्यपि औचित्यात् प्रतिपाद्यप्रतिपादकतालक्षणं संबन्धविशेषमभिधत्ते; अच्युतपदस्य पूर्वोक्तप्रवृत्तिनिमित्तविशिष्टधर्मिबोधकत्वात् ग्रन्थस्यास्य तत्तदीयगुणप्रतिपादनपरत्वे ऽपि नानुपपत्तिः; शतकं शतसंख्याकस्कन्ध-

कसमुदायात्मकमिदमिति प्रतिपाद्यवैशिष्ट्यमुक्तम्; सहृदयानां मनस्विनाम्, अनेन दुर्मानमदमत्सरादिकलुषिता अनभिज्ञाश्च व्यावृत्ताः; गुणग्रहणपारीणधिषणाः परिश्रमविदश्चात्र सहृदयशब्देन विवक्षिताः, इतरेषां हृदयसत्ताफलानवाप्त्या अहृदयत्वस्यावर्जनीयत्वात्; पक्षे भोगप्रवणानामाढ्यानां,हृदयेषु गुणगणवशीकृतेषु मनस्सु भुजान्तरेषुच, शोभताम् अनुसंधीयमानतया संस्कारगोचरत्वरूपेण स्थिरीभवतु, पक्षे समुचिताश्रयलाभेन प्रकाशताम्। अत्र 'विरचितं, सुभगं, समग्रगुणं, हृदयेषु शोभताम्' इति निर्देशवशात् विषये अच्युतशतके रत्नाभेदाध्यवसाय आक्षिप्यते; सहृदयपरिग्रहाशास्त्या न किमप्यहृदयजनापरिग्रहेण च्छिन्नमिति सूच्यते; शोभाया आशंसनेन निर्वहणे मङ्गलमपि संपादितं भवति; तेन प्रबन्धोऽयं व्याख्यातृश्रोतृप्रभृतीनामनन्तेष्टप्राप्त्यनिष्टपरिहारहेतुतया निखिलमङ्गलास्पदं भवति; यदाह भगवान् भाष्यकारः—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति' इति । अत्र आचार्यशब्दे 'आचार्ये चो ह्रस्वः' इति चकारसम्बन्ध्याकारस्य वा ह्रस्वादेशः; 'स्याद्भव्यचैत्यशौर्यसमे यात्' इति संयुक्तयकारात्प्रागित्वम् ॥

एवमस्मिन् भगवत्प्रार्थनैकतानेऽपि प्रबन्धे मतान्तरप्रतिक्षेपश्च सूच्यते।तथाहि —'सअलअमाण णिट्ठा' 'वंदित्तणमहिआणं सुईण' इत्यादिभिः आगमानां सिद्धवस्तुपरतां वारयन्तो मीमांसका नानुगताः । 'आअममेत्तपमाणो' इत्यादिना आनुमानिकेश्वरवादिनो वैशेषिकाः निरीश्वरवादपराः सांख्यप्रभृतयश्च वारिताः । 'कुणसि ण कीरसि केणवि' इत्यादिना मूर्तिलयसाम्योत्तीर्णब्रह्मवादा न संमाविताः। 'भुवणाणं होसि अच्चुअ उवाआणं... वहसि निमित्तत्तणं वि अब्भुअसत्ती' इत्यनेन निमित्तोपादानयोर्भेदमाचक्षाणाः पाशुपतहैरण्यगर्भवैशेषिकप्रभृतयः प्रत्याहताः । 'सा वि सिरी होइ तुज्झ' इत्यनेन शिवपारम्यमुत्प्रेक्षमाणाः केवलश्रीपारम्यवादिनश्च विमानिताः।'तुज्झ गुणरअणाइ' 'सिद्धंजणं व सामं तुज्झ तणुं' 'लच्छिअविरआसरिअं' इत्यादिना भूयसा प्रबन्धेन सत्यमूतगुणविग्रहादिविशिष्टब्रह्माभिधानात्, विरजासरिदतिक्रमामानवकरस्पर्शपर्यङ्कारोहणदेशविशेषावच्छिन्नब्रह्मप्रा-

तिप्रभृतीनां प्रकाशानाच्च अद्वैतिप्रमुखाः पराकृताः। इत्थमितरदपि विभावनीयम् ॥

उपादानत्वं ब्रह्मणः शरीरभूतचेतनाचेतनद्वारा;सङ्कल्पविशिष्टवेषेण तु निमित्तत्वमित्यादिभिरामूलचूडमुपपादितः प्रधानप्रतितन्त्रार्थः ॥

किंचात्र प्रथमं ब्रह्मलक्षणभूतजगत्कारणतोपन्यासेन तद्विषयकसंशयोपशमनेन गुणैः स्वरूपतश्च निरतिशयबृहत्त्वनिखिलहेयप्रतिभटत्वनिखिलगुणाकरत्वरूपोभयलिङ्गत्वमनोमयत्वसत्यकामत्वाद्यभिवर्णनैः समन्वयाविरोधरूपाध्यायद्वयार्थो विचारितः। भक्तिप्रपत्तिगम्यत्वनिर्वाहेण साधनरूपतृतीयाध्यायप्रमेयजातमुदञ्चितम्। अन्ते च मनोरथप्रकाशनमार्गेण फलाध्यायविषयः प्रपञ्चितः। इति समन्वयाविरोधसाधनफलविषयशारीरकचतुरध्यायी व्याख्याता ॥

आदौ तत्त्वनिरूपणम्, समनन्तरं गुणाद्यनुभवः, उपायवैभवं, भागवतप्रभावः, प्रपत्तिः, उत्तरकृत्यं, फलचिन्तनम्, आचार्यानुग्रहस्यैव कार्यकारित्वमिति च रहस्यप्रस्थानमादृतम् ॥

'सा वि सिरी होइ तुज्झ' इति पूर्ववाक्यस्थश्रीमत्पदार्थः, 'सअलाण धरणिअमण' इत्यादिना भूयसा प्रबन्धेन चेतनाचेतनदिव्यात्मस्वरूपतद्गुणदिव्यमङ्गलविग्रहतद्गुणदिव्यलोकविभूतिद्वयपरिजनपरिच्छदादिप्रशंसया नारपदार्थः, सकलागमविषयत्वादिना दिव्यात्मस्वरूपविषयेण अयनपदार्थः, 'ण हु ताण मोहतिआमा' इत्यादिना शरणपदार्थभूतोपायतायाम् अनिष्टपरिहारकत्वं, 'पंतिं पूरेंति पण्णइंदमुहाणं' इत्यादिना इष्टप्रापकत्वांशवर्णनमित्याहत्य शरणशब्दार्थः, 'कलुणाए तुज्झ पुण्णपत्तं होमो'इत्यादिना आकिञ्चन्यानन्यगतित्वाद्यभिलापेन महाविश्वासाद्यङ्गकात्मार्पणरूपप्रपत्तिरुपपादितेति पूर्वखण्डार्थः ॥

अथ 'लच्छिपुलइअं' इत्युत्तरखण्डोपात्तः प्राप्तिप्रतिसम्बन्धिभूतश्रीमत्पदार्थः 'णिअकम्मणिअलजुअलं' इत्यादिना उत्तरपूर्वाघयोरश्लेषविनाशसकलपाद्यनुवर्णनेन आश्रितकार्यापादकज्ञानशक्त्यादिशालितासमर्थनान्नारायणपदार्थः,'दासो' 'सूरिसरिच्छो' इत्यादिना चतुर्थ्यर्थः, 'वसअं कुणसु' 'मं लहसु' इत्यादिषु प्राप्तेर्भगवन्निष्ठताभिधानात्फले स्वाम्यं स्वामिन एव, न ममेति चतुर्थ्यर्थे कैङ्कर्ये स्वस्वातन्त्र्यपरिहारान्नमश्शब्दार्थश्च निरूपितः; नैच्यानुसन्धानादिकं तु अस्यैवाङ्गभू-

तमित्याहत्य द्वयरूपमन्त्ररत्नानुसन्धानरूपोऽयं प्रबन्धः । अत एव अस्य स्वस्वरूपपरस्वरूपपुरुषार्थस्वरूपोपायस्वरूपविरोधिस्वरूपनिरूपणपरत्वमपि निर्व्यूढमिति निखिलमनाविलम् ॥

मह वअणाणं वि अहं तीरेमि ण भाववण्णणे मंदमई ।
इत्तिलमेत्ते विहवे कइतक्किअकेसरिस्स वअणेसु गओ ॥
जोण्हा व णिव्वलंती अच्चुअसअआहिहाउ विमलरअणाहि ।
कंठे धरिआ सोहं किईणव देउ धणिअजम्मणवराण ॥
देएसरस्स चलणे पंकअणाहस्स साअरं णिक्खित्ता ।
दोसे हरेउ एसा देउ महाणन्दसंपअं अम्हाणं ॥
सढमरिसणकइभूसणकुमारताअरिअसूरिरअणस्स इमे ।
नरहरिकरुणाअ किई दिसंगणाणं पसाहणी सइ जिणउ ॥

सव्याख्यमच्युतशतकं
सम्पूर्णम्.

